संस्कृतविद्यासमिति-पत्रिका

SAMSKRITASRI
A Monthly Journal of
Samskrit Education Society
தனி ப்ரதி
விலை ரூ. 4
JANUARY - 2019

ஸம்ஸ்க்ருதஶ்ரீ:
ஸம்ஸ்க்ருத கல்விக்
கழக மாத இதழ்
212/13-1,
செயிண்ட் மேரிஸ் ரோடு,
மந்தைவெளி, சென்னை-28


यं देवदेवं मुनयो विमुक्त्यै समाश्रयन्ते सततं प्रपन्नाः।
सोऽयं हरिर्मोचयितुं यमाप तं भक्तवर्यं प्रणमामि भीष्मम्।।

முனிவர்கள் தங்களுடைய முக்திக்காக எப்போதும் சரணடைந்து எந்த தேவதேவரை புகலடைகிறார்களோ அத்தகைய ஹரியே உய்விப்பதற்காக எவரிடம் சென்றாரோ அத்தகைய பக்தர்களுள் சிறந்த பீஷ்மரை வணங்குகிறேன்.

☎ 24951402

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.



| | | |
|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை | 988[illegible]122[illegible]4 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், மேடவாக்கம் | 98[illegible]8110 |
| 3. | ஸ்ரீமதி சாந்தி அசோக், மந்தைவெளி | [illegible]51402 |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர், | 24320544 |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை -95, | 6568[illegible]5 |
| 6. | ஸ்ரீமத் பார்வதீ ராமசந்திரன் அண்ணா நகர் | 262157[illegible]9 |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ண ன் கொரட்டூர் | 26872430 |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் | 22291720 |
| 9. | ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் | 9841212047 |
| 10. | ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் | 9962837319 |
| 11. | ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் | 9841403859 |
| 12. | ஸ்ரீ S. அனந்தன், மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம், ஓ.ஓ. நகர் | 23640864 |
| 14. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் | 2430632 |
| 15. | ஸ்ரீமதி ராஜம் சுந்தர், திருநெல்வேலி | 9488326850 |
| 16. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் | 9445703470 |
| 17. | ஸ்ரீ R. ரங்கநாதன், காஞ்சீபுரம் | 97910 55428 |
| 18. | ஸ்ரீ C.A. ஏகாம்பரம், கோயம்புத்தூர் | 0422-2233242 |
| 19. | ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, | 0487-2382964 |
| 20. | ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், | |

संस्कृतश्रीः

माला : ४१ January - 2019 पुष्पम् : ०१

कलि : ५१२० विलम्बि - मकरमासः ४१-०१

The Samskrit Education Society Established with the blessings of His Holiness **SRI MAHASWAMIGAL** of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**
Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai – 600 028.

**PRESENT ACTIVITES**
1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.



"DD/Cheque should be sent by Speed Post only"



**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL | : Rs. 40/- |
| LIFE SUBSCRIPTION | : Rs. 400/- |
| PAGE DONATION | : RS.200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer.

**The Samskrit Education Society (Regd.),**
Old 212/13-1, St.Mary's Road,
Mandaiveli, Chennai - 600 028.
Ph: 044 - 24951402
Mail: samskritasri@gmail.com

# सम्पादकीयम्

**निगमभणितधर्मं नित्यमालोड्य बुद्ध्या**
**नवरसरुचिधन्यैः गद्यपद्यैः सुलेखैः।**
**सहृदयहृदयान्यावर्जयन्ती मनोज्ञा**
**विलसतु भुवि धन्या संस्कृतश्रीः वरेण्या।।**

दृग्दृश्यद्रष्टृभेदेन भिन्ने जगति विविधरूपविशेषविलास बिब्बोकलीलारङ्गायिते विविधाः मनुजाः, केचन दिव्यगुणगणमण्डिताः परार्थैकफलाः, केचन सामान्यगुणयोगाल्लौकिकदृष्टयः, कतिचन दुष्टगुणभूयिष्ठाः पशुप्रायाः। किन्तु प्रकृतेः समाना स्थितिः, वायुस्समं वात्यमीषु, सूर्यो काशयति समम्, चन्द्रश्च शिशिरयति समकिरणः। एवं सर्वोपि भागः प्रकृतेः समानामेव स्थितिं प्रदर्शयति। उपदेशोऽयमस्माकं नितरामनर्घः। **पण्डिताः समदर्शिनः** इति गीतावाक्यमत्र प्रमाणम्। भवतु नाम ब्रह्मज्ञानमग्नानां पारमार्थिकदशायां सर्वत्र समानं चिन्तनमिति, अथापि लौकिकदशायामपि सर्वत्र समाना दृष्टिर्विधातव्या येन आत्मसमेषु मत्सरादिकं न जायते। इदं चिन्तनमेव सर्वशान्तिनिदानं भवेत्। आहुश्च यतिसार्वभौमाः श्रीमच्चन्द्रशेखरेन्द्रसंयमीन्द्राः **आत्मवदेव परानपि पश्यते**ति वेदान्तविद्यागर्भिते स्वरचिते गाने।

अतः समुदाये दृश्यमानानां समस्तसमस्यानां निवारणं आत्मवदेव परदर्शनेनैव भवति। तत्र देववाणीनिबद्धं वाङ्मयमत्यन्तमुपकरोति यदुपदिशति **वसुधैव कुटुम्बक**मित्यादि। अतः संस्कृतस्य लोकोपयोगिता भवति समस्तसमस्यानिवारणायोपायदानम्। तादृशोपायसंवलितं संस्कृतवाङ्मयं पुरत उपस्थापयन्ति मनीषिणः येन संस्कृतस्य प्रसारस्तथा विश्वशान्तिश्च जायेतामिति प्रार्थयते सम्पादकवर्गः।

# संप्रार्थये

**Prof. ABHIRAJA RAJENDRA MISHRA**
Formerly Vice-Chancellor, Varanasi

देहि यस्मै भवाय प्रभो, गेहिनीम्
तां भवानीं विधेहीति सम्प्रार्थये।।१।।

एकत्वं देहि यस्मै सुतं जीवने।
संस्कृतं तं विधेहीति सम्प्रार्थये।।२।।

तुङ्गतां देहि यस्मै मही.....।
सुस्थिरं तं विधेहीति सम्प्रार्थये।।३।।

देहि यस्मै प्रभो, नाभिकस्तुरिकाम्।
दुर्लभं तं विधेहीति सम्प्रार्थये।।४।।

देहि यस्मै कलादक्षतां श्रीपते।
तं सलज्जं विधेहीति सम्प्रार्थये।।५।।

देहि यस्मै नु झञ्झानिसर्गं प्रभो।
तं प्रशान्तं विधेहीति सम्प्रार्थये।।६।।

देहि यस्मै हिमौघावदातं यशः।
निष्कलङ्कं विधेहीति सम्प्रार्थये।।७।।

देहि यस्मै विधेः चण्डपाषाणताम्।
तं सवह्निं विधेहीति सम्प्रार्थये।।८।।

देहि यस्मै निधिं सद्गुणानां हरे।
निर्मदं तं विधेहीति सम्प्रार्थये।।९।।

# निपुणप्राघुणकम् (भाणः)

Dr. SHANKAR RAJARAMAN
Bangalore

(परिक्रम्य अवलोक्य)

**प्रकामोत्तालाभिर्मुखरितहरिद्गीतिभिर्यावनीभि-**
**स्तडिद्दीपालोकैस्तरलतरलैः किञ्च दुष्प्रेक्षमन्तः ।**
**इदं नानादेशोपनतमदिरासौरभाहूतभृङ्गं**
**पुरः पानागारं प्रणयिमिथुनस्वैरलीलानुकूलम् ।।३४।।**

तत् प्रविशामि । (निरूप्य)

**अग्रे परस्परकटीनिहितैकहस्तौ**
**हस्तान्तरेण च गृहीतपरस्परांसौ ।**
**माध्वीकपानमदमन्थरपादपातौ**
**कामं प्रनृत्यत इमौ यवनौ युवानौ ।। ३५**

अपि चान्यत्र -

**किमपि निगदन्नस्पष्टार्थं मदारुणलोचनः**
**शिथिलवसनो हस्तप्रान्तस्खलन्मधुभाजनः ।**
**त्रिचतुरपदन्यासायाद्व्रणिङ्ग्निपतत्यसौ**
**क्वचन च सुराध्यक्षादेशाज्जनैरपनीयते ।। ३६**

अत्र हि क्वापि शौण्डिक्यो मे यवनभाषया स्वागतमुदाहरन्ति, क्वापि च हिरण्यकादयः पुराणसुहृदो द्यूतक्रीडायै निमन्त्रयन्ति माम्। अयमपरः प्रियवयस्यो मधुकरकः प्रसारितबाहुरुत्तिष्ठति मामालिङ्गितुम्। इयमपि मद्दर्शनोन्मुखी प्रिया शशिकला कारणान्तराणि विभाव्य

सखीभ्यः कथञ्चिदात्मानं मोचयति । (अवलोक्य, साश्चर्यम्) अहो ! कथं मद्दर्शनादकाण्ड एव सौरिकं विजयमाल्यकमभितो जातः कोऽपि जनसम्मर्दः । भवति, पृच्छामि ।

(प्रकाशं) वयस्य, विजयमाल्यक, किङ्कृतोऽयं सम्भ्रमः ? (आकर्ण्य) किं ब्रवीषि -

'आर्य शेखरक, जानात्येव भवान् यत्किमप्यत्र गतेऽहनि संवृत्तम् । तत्सौरिकगणेन मिलिन्दकस्य बहिष्कारे कृता मतिः । न ह्येवंविधानि दण्डानि भवादृशो महाजनमपहाय निश्चीयन्ते । तदत्र भवतः क आशयः ? इति (स्वगतं) हन्त ! हतोऽसि मिलिन्दक, यत्तादृगारब्धमीदृक्परिणमति ।

**चित्रोद्यमद्द्विरदगण्डमदाम्बुलेखा**
**या तु प्रिया तव मिलिन्दक चित्रलेखा ।**
**तां पातुमात्तरभसो यदभूस्ततोऽसि**
**त्वं सौरिकश्रवणतालनिरासयोग्यः ।।३७।।**

(प्रकाशं) वयस्य, ननु वेत्सि यन्मिलिन्दकस्य चारित्र्यम् इतः पूर्वमस्पृष्टकलङ्कमासीत् । किञ्च सौरिकगणोऽपि स्मरतु मिलिन्दकेन पुरा कृतमुपकारशतम् । यद्यसौ दण्ड्यते, न हि तेन चित्रलेखापि तुष्यति ! स हि तस्या बहिश्चराः प्राणाः । चित्रलेखायाः क्रोधस्तु परा हानिः सौरिकगणस्यैव । तन्मिलिन्दकस्य क्षन्तव्योऽयं प्रथमापराध इति मेऽभिप्रायः ।

(आकर्ण्य) किं ब्रवीषि - 'सौरिकगणेन सम्यग्गृहीतमार्यस्य मतम्' इति? तेन हि साधयाम्यहम् ।

(अनुवर्तते....)

## SATYAM ADVAITAM

Sri. P.R. KANNAN, Mumbai

**७. रज्जुवन्मायाविवच्चाऽद्वैतं परमार्थतः।**

**(माण्डूक्यकारिकाभाष्यम्) आ १७**

Advaita (non-duality), like the rope (which appears as snake) and the wielder of Maya (the Great Delusion), is the Supreme Principle. (Mandukyakarika Bhashyam 1.17)

**८. ज्ञाते परमार्थतत्वे द्वैतं न विद्यते ।**

**(माण्डूक्यकारिकाभाष्यम्) आ १८**

Once the Supreme Principle is known, duality ceases to exist. (Mandukyakarika Bhashyam 1.18)

**९. अद्वये शिवे शान्ते सर्वे एकीभवन्ति ।**

**(मुण्डकभाष्यम्) ३-२-७**

In non-duality, which is auspiciousness and tranquility, all become unified. (Mundaka Upanishad Bhashyam 3.2.7)

**१०.अद्वयलक्षणं परमं साम्यमुपैति । (मुण्डकभाष्यम्) ३-१-३**

The characteristic of non-dual Gnani is that he attains absolute equality. (Mundaka Upanishad Bhashyam 3.1.3)

**११.विद्यया स्वाभाविकः परिपूर्णः एकः आनन्दः अद्वैतो भवति।**

**(तैत्तिरीय भाष्यम्) २-८-१**

With true knowledge, one attains his real nature, perfection, uniqueness, bliss and non-duality. (Taittiriya Bhashyam 2.8.1)

**१२.नहि विश्वं नाम पुरुषात् अन्यत् किञ्चिदस्ति ।**

**(मुण्डकभाष्यम्) २-१-१०**

There is nothing called universe, distinct from Purusha (the Supreme Person, Brahman). ((Mundaka Upanishad Bhashyam 2.1.10)

**१३. मोक्षः परविद्याविषयः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वयः।**

**(मुण्डकभाष्यम्) २-१-१**

Moksha (Liberation) is the subject of Supreme Knowledge, is characteristic of being established in one?s indwelling Atman, is supreme Bliss and non-duality. (Mundaka Upanishad Bhashyam 2.1.1)

**१४.इष्यते च सर्वापनिषदां सर्वात्मैक्यप्रतिपादकत्वम्।**

**(माण्डूक्यकारिकाभाष्यम्) आ ३**

Expounding the identity of Atman in all beings is intended in all Upanishads. (Mandukyakarika Bhashyam 1.3)

**१५. सर्वप्रपञ्चोपशमेऽद्वैतसिद्धिः।**

**(माण्डूक्यकारिकाभाष्यम्) आ ३**

Non-duality is attained when the universe subsides. (Mandukyakarika Bhashyam 1.3)

१६. शिवं यतः अद्वैतं भेदविकल्परहितम् ।
(माण्डूक्यकारिकाभाष्यम्) आ ७

Non-duality is devoid of notions of distinctions and hence auspicious. (Mandukyakarika Bhashyam 1.7)

१७. द्वैतप्रपञ्चोपशमे स्वस्थता अद्वैतभावः प्रयोजनम् ।
(माण्डूक्यकारिकाभाष्यम्) आ १

The benefit of the subsidence of the dualistic phenomenal world is establishing in one?s real nature in non-dual state. (Mandukyakarika Bhashyam 1.1)

१८. ब्रह्मात्मतावगमादेव सर्वक्लेशप्रहरणात् पुरुषार्थसिद्धेः ।
(ब्रह्मसूत्रभाष्यम्) १-४-४

By comprehending the state of Brahman alone, all miseries are destroyed and the ultimate end of human life is attained. (Brahmasutra Bhashyam 1.4.4)

१९. न हि एकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनस्सम्भवोऽस्ति । (ब्रह्मसूत्रभाष्यम्) १-४-४

Once the unity is perceived, the agitation caused by perception of duality does not arise again. (Brahmasutra Bhashyam 1.4.4)

[To be continued....]

# रघुवंशम्

**Sri. R.RANGANATHAN,**
Sanskrit Education Society, Kanchipuram

## रघुवंशे एकषष्टितमः श्लोकः

**दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता।**
**जानकी विषवल्लीभिः परीतेव महौषधिः।।**

### पदच्छेदः

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता। जानकी विषवल्लीभिः परीता इव महौषधिः।

### शब्दधातुरूपाणि

दृष्टा, राक्षसीवृता,

| | | |
|---|---|---|
| परीता | - | रमाशब्दवत्। |
| विचिन्वता | - | विचिन्वता, विचिन्वद्भ्यां, विचिन्वद्भिः - तका. पुं. तृ. एक। |
| तेन | - | दका. पुं. तृ. एक। |
| लङ्कायां | - | लङ्कायां, लङ्कयोः, लङ्कासु - आका. स्त्री. स.एक। |
| जानकी | - | नदीशब्दवत्। |
| विषवल्लीभिः | - | वल्ल्या, वल्लीभ्यां, वल्लीभिः - ईका. स्त्री. तृ. बहु। |
| इव | - | अव्य. |
| महौषधिः | - | इका. स्त्री. प्र. एक। |

### प्रतिपदार्थः

लङ्कायां - இலங்கையில், विचिन्वता - தேடுகின்ற,

तेन - அந்த மாருதியால், राक्षसीवृता - அரக்கியரால் சூழப்பட்டுள்ள, जानकी - சீதை, विषवल्लीभिः - விஷக்கொடிகளால், परीता - சூழப்பட்டுள்ள, महौषधिः इव - ஸஞ்ஜீவினிக் கொடி போல், दृष्टा- காணப்பட்டாள்.

**व्याकरणविशेषाः**

राक्षसीवृता - राक्षसीभिः वृता।
विषवल्लीभिः - विषेण युक्ता वल्लयः। ताभिः।
महौषधिः - महती चासौ ओषधिः।

**कोषः**

वल्ली - वल्ली तु व्रततिर्लता।

**भावार्थः**

रावणराजधान्यां मृग्यमाणः हनूमान् निशाचरीभिः वृतां सीतां विषलताभिः वेष्टितां सञ्जीविनीलतामिव ददर्श।

**रघुवंशे द्विषष्टितमः श्लोकः**

**तस्यै भर्तुरभिज्ञातं अङ्गुलीयं ददौ कपिः।**
**प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः।।**

**पदच्छेदः**

तस्यै भर्तुः अभिज्ञातम् अङ्गुलीयं ददौ कपिः। प्रत्युद्गतम् इव अनुष्णैः तदानन्दाश्रुबिन्दुभिः।

**शब्दधातुरूपाणि**

तस्यै - दका. स्त्री. चतु. एक।
भर्तुः - ऋका. पुं. ष. एक।

अभिज्ञानम्, अङ्गुलीयं,

प्रत्युद्गतम् - अका. नपुं. द्वि. एक।

ददौ - ददौ, ददतुः, ददुः - डुदाञ् - दाने
इति धातोः लिटि प्र. पु. एक।

कपिः - हरिशब्दवत्।

अनुष्णैः - रामशब्दवत्।

तदानन्दाश्रुबिन्दुभिः - उका. पुं. तृ. बहु।

**प्रतिपदार्थः -**

कपिः - வானரரான ஹனுமான், भर्तुः - கணவரின், अभिज्ञानं - அறிகுறியானதும், अनुष्णैः - குளிர்ந்த, तदानन्दाश्रुबिन्दुभिः - சீதையின் ஆனந்த கண்ணீர் துளிகள், प्रत्युद्गतमिव (स्थितं) - எதிர்கொண்டு அழைக்கப்பட்டது போல் இருந்ததுமான, अङ्गुलीयं - மோதிரத்தை, तस्यै - சீதையினிடம், ददौ - கொடுத்தார்.

**व्याकरणविशेषः**

अनुष्णैः - न उष्णाः अनुष्णाः। तैः।

तदानन्दाश्रुबिन्दुभिः - आनन्दस्य अश्रूणि आनन्दाश्रूणि।
तस्याः आनन्दाश्रूणि तदानन्दाश्रूणि। तेषां बिन्दवः। तैः।।

**कोषः**

अङ्गुलीयकमूर्मिका।
दृग्दृष्टी चास्त्रु नेत्राम्बु रोदनं चास्रमश्रु च।

**भावार्थः**

रामस्य प्रत्यभिज्ञानसाधकं तद्दर्शनेन वैदेह्याः आनन्दाश्रुभिः कृतस्वागतमिव स्थितम् अङ्गुलीयकं मारुतिः सीतायै प्रददौ।

## मन्त्रार्थचिन्तनम् - १८ वैदिकसदाचारस्तरः

**Dr. M. JAYARAMAN**
Krishnamacharya Yoga Mandiram, Chennai

**यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति, यथासिधारां कर्तेऽवहितामवक्रामे यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येवमनृतादात्मानं जुगुप्सेत्।।**

महानारायणोपनिषद् अनुवाकः ११

**सायणभाष्यानुसारी अर्थः**

वैदिकानां कर्मणामनुष्ठानेन कश्चित् पुरुषः ब्रह्मज्ञानप्राप्तौ योग्यः भवति। अतः अस्मिन् मन्त्रे सत्कर्मानुष्ठानस्य प्रशंसा क्रियते। वेदशास्त्रनिन्दितं कर्म ब्रह्मज्ञानप्राप्तौ नरकादिद्वारा प्रत्यवायं जनयति इति हेतोः तस्य पापकर्मणः निन्दापि अस्मिन् मन्त्रे विद्यते।

उद्याने यदि चम्पकादिपुष्पवृक्षाः पुष्पिता भवन्ति तर्हि तेषां सुरभिगन्धः वायुना सुदूरं नीयते प्रख्याप्यते च । इत्थमेव सत्कर्माचरणस्य यशः द्युलोकपर्यन्तमपि प्रसरति । तस्मात् सत्कर्म अनुष्ठेयम्।

दुष्कर्म न कर्त्तव्यमित्यत्र कश्चित् दृष्टान्तः प्रदर्श्यते मन्त्रे । कश्चित् पुरुषः अगाधस्य गर्तस्य पुरतः तिष्ठन्नस्ति। गर्तस्य उपरि चलितुम् एका तीक्ष्णा असिधारा स्थापितास्ति। यदि गर्तः लङ्घनीयः तर्हि असिधारायाः उपर्येव चलनीयम्। यदि गर्तलङ्घनोत्सुकः असिधारायाः उपरि पादं दृढतया न्यस्येत् तर्हि कदाचित् गर्तं सः लङ्घेत्, किन्तु तस्य पादः छिद्येत । किन्तु यदि पादच्छेदमनिच्छन् असिधारोपरि

नात्यन्तं दृढपादविन्यासं कुर्यात् तर्हि सः गर्तपतितो भवेत्। उभयथा हानिरेव। तस्मात् तादृशं कर्म कर्तुं सर्वथा स न इच्छेत्। एवमेव दुष्कर्मोत्सुकः अपि चिन्तयेत् - यदि प्रकटतया दुष्कर्म करिष्यामि तर्हि जनैः इहैव निन्दितो भविष्यामि। यदि च गुप्ततया दुष्कर्माचारिष्यामि तर्हि गभीरगर्तपतनवत् नरकादिषु परत्र दुःखमनुभवेयम् । तस्मादुभयथा प्रकटतया, गुप्ततया वा दुष्कर्माचरणे हानिरेव। तस्मादहं ततो निवर्ते इति भावयेत् मोक्षार्थी चेत्।

## विवरणम्

वेदमाता स्पष्टैः सरलैः उदाहरणैः निजशिशून् अस्मान् प्रेरयति सत्पथे। एतानि उदाहरणानि शिशूनामपि हृदयङ्गमानि । अत एव आचार्याः शङ्करभगवत्पादाः **मातापितृसहस्रेभ्योऽपि हितैषिणा वेदेन** इति वेदस्य निजजनिप्रदेभ्यः सहस्रगुणहितैषित्वं प्राचिख्यपन्।

प्रकटतया वा गुप्ततया वा न कस्यचित् हानिः आचारणीया इति वैदिकः सदाचरस्तरः। अस्मत्संस्कृतेः आद्यग्रन्थे वेदे एव सदाचारस्य उत्कृष्टः अयं स्तरः निर्णीतः इति हेतोः तदनुसारिणः पूर्वजाः ऋषयः मुनयः ज्ञानिनः विज्ञानिनः च संवृत्ताः। तैः प्रदत्ता पित्र्र्जिता ज्ञानसंपत् अद्यावधि वैश्विकजनहिताय कल्पमाना अस्ति। विश्वस्य नानादिग्विभागेभ्यः अद्यापि अहमहमिकतया समागच्छन्तः सन्ति जिज्ञासवः एतद्देशप्रसूतस्य सकाशात् अग्रजन्मनः निजचारित्रशिक्षणार्थम्। तस्मात् अयं मन्त्रः वैदिकजीवनमूल्यानां प्रख्यापकवरिष्ठप्रतीकम्। तेन साभिमानाः वयं तदनुयायिनः भूयास्म इत्याशास्य विरम्यते।

# संस्कृतश्लोकानुरूपः
# तिरुक्कुरल्

## பெருமை - गौरवम् (माहात्म्यम्)

श्रीकलियन् रामानुजजीयर् (भूतपूर्वः),
नाङ्गुनेरि

ஒளிஒருவற்கு உள்ள வெறுக்கை இளிஒருவற்கு
அஃதிறந்து வாழ்தும் எனல்.

नरस्य वस्तुतस्तेजो मनस्वित्वाख्यसम्पदा।
विना तां जीवनेच्छैव कस्यचिद्दोष उच्यते।।

பிறப்பொக்கும் எல்லா உயிர்க்கும் சிறப்பொவ்வா
செய்தொழில் வேற்றுமை யான்.

मानवानां हि सर्वेषां साम्यमेवास्ति जन्मना।
क्रियमाणक्रियाभेदाद्गौरवं भेदमश्नुते।।

மேலிருந்தும் மேலல்லார் மேலல்லர் கீழிருந்தும்
கீழல்லார் கீழல் லவர்.

जन्मवित्तादिनोत्कृष्टा अपि नीचक्रिया जनाः।
नोच्चास्तथा नैव नीचास्सन्तो दैन्यादिना भुवि।।

ஒருமை மகளிரே போலப் பெருமையும்
தன்னைத்தான் கொண்டொழுகின் உண்டு.

साध्व्यो यथ हि रक्षन्ति पातिव्रत्यं निजं स्वयम्।
तथैव गौरवं स्वीयं स्वयं रक्ष्यं हि मानवैः।।

பெருமை யுடையவர் ஆற்றுவார் ஆற்றின்
அருமை உடைய செயல்.

नरा गौरवसम्पन्ना दारिद्र्ये संस्थिता अपि।
यथाविधि सदा कुर्युः कार्याण्यत्युन्नतानि हि।।

சிறியார் உணர்ச்சியுள் இல்லை பெரியாரைப்
பேணிக்கொள் வேமென்னும் நோக்கு

सज्जनाननुसत्येह महतो मानिनो गतिः।
श्रेष्ठेत्यादरणं तस्या नीचबुद्धिषु नास्ति वै।।

இறப்பே புரிந்த தொழிற்றாம் சிறப்புந்தான்
சீரல் லவர்கண் படின்.

दीयमानं हि मानिभ्यः सद्भ्यो गौरवमत्र चेत्।
अल्पेभ्यो दीयते तर्हि तेषां तद्दर्पवर्धकम्।।

பணியுமாம் என்றும் பெருமை சிறுமை
அணியுமாம் தன்னை வியந்து.

वस्तुतो गौरवाढ्या हि विनम्रास्सर्वदा भुवि।
मिथ्यागौरवतोऽल्पा हि स्वविकत्थनतत्पराः।।

பெருமை பெருமிதம் இன்மை சிறுமை
பெருமிதம் ஊர்ந்து விடல்.

आर्हन्त्यामपि गर्वस्य राहित्यं ह्येव गौरवम्।
मिथ्यागौरवमारोप्य गर्वत्वमिह लाघवम्।।

அற்றம் மறைக்கும் பெருமை சிறுமைதான்
குற்றமே கூறி விடும்.

सन्तो गौरवसम्पन्नाः परदोषान् कदापि न।
प्रकटीकुर्युरल्पास्तु परदूषणतत्पराः।।

# ग्रन्थलिपिपरिज्ञानम्

(अधो लिखितं गद्यभागं ग्रन्थलिप्यां दृष्ट्वा अभ्यासं कुर्वीत।)

## कमलम्

कमलानि सरसि पङ्के जायन्ते। अतस्तानि सरसिजानि पङ्कजान्यम्भोजानीत्यादिभिः शब्दैर्व्यवह्रियन्ते। कमलेषु नानाजातयः सन्ति। तत्र नीलमम्भोरुहम् उत्पलम् इति रक्तम् कोकनदम् इति सितम् पुण्डरीकम् इति चाभिधां भजति।

कुवलयान्यपि सरसि पङ्क एव जायन्ते। अथापि तेषां न पङ्कजादिशब्दैर्व्यवहारः। कुवलयानि कमलाकाराण्येव। किन्तु तेषु सौगन्ध्यं नास्ति।।

कमलकुसुमस्याधस्ताद्दृश्यमानः प्रकाण्डो मृणालम्। मृणालस्यान्तर्भागे छिद्राणि तन्तवश्च वर्तन्ते।

कमलसरांसि कमलिन्य इति कुमुदसरांसि कुमुदिन्य इति चोच्यन्ते। कमलिन्यः सूर्यस्य कुमुदिन्यश्चन्द्रस्य चोदये विकसन्ति। तेन सूर्यः कमलिनीनायक इति, चन्द्रः कुमुदिनीनायक इति च प्रसिध्यतः। हेमन्ते हिमेन सिक्ताः कमलिन्यः स्मरणीयशोभाः सम्पद्यन्ते।

कमलानां मध्यभागे किञ्जल्काः सन्ति। तेषु सुगन्धयः परागा विद्यन्ते। मधुकराः प्राधान्येन कमलेभ्यो मधु पिबन्ति।

यद्यपि मल्लिकादीनि कुसुमानि कमलापेक्षया सुगन्धितराणि तथापि तेषामेतावत् सौन्दर्यं नास्ति। अरविन्दान्येव कुसुमेषु सुन्दरतमानि। अत एव पद्मं पद्मायाः सद्म निगद्यते।

## 𑌕𑌮𑌲𑌮𑍍

𑌕𑌮𑌲𑌾𑌨𑌿 𑌸𑌰𑌸𑌿 𑌪𑌙𑍍𑌕𑍇 𑌜𑌾𑌯𑌨𑍍𑌤𑍇। 𑌅𑌤𑌃 𑌕𑌮𑌲𑌾𑌨𑌿 𑌸𑌰𑌸𑌿𑌜𑌾𑌨𑌿 𑌪𑌙𑍍𑌕𑌜𑌾𑌨𑍍𑌯𑌮𑍍𑌭𑍋𑌜𑌾𑌨𑍀𑌤𑍍𑌯𑌾𑌦𑌿𑌭𑌿𑌃 𑌶𑌬𑍍𑌦𑍈𑌰𑍍𑌵𑍍𑌯𑌵𑌹𑍍𑌰𑌿𑌯𑌨𑍍𑌤𑍇। 𑌕𑌮𑌲𑍇𑌷𑍁 𑌨𑌾𑌨𑌾𑌜𑌾𑌤𑌯𑌃 𑌸𑌨𑍍𑌤𑌿। 𑌤𑌤𑍍𑌰 𑌨𑍀𑌲𑌮𑌮𑍍𑌭𑍋𑌰𑍁𑌹𑌮𑍍 𑌉𑌤𑍍𑌪𑌲𑌮𑍍 𑌇𑌤𑌿 𑌰𑌕𑍍𑌤𑌂 𑌕𑍋𑌕𑌨𑌦𑌮𑍍 𑌇𑌤𑌿 𑌸𑌿𑌤𑌂 𑌪𑍁𑌣𑍍𑌡𑌰𑍀𑌕𑌮𑍍 𑌇𑌤𑌿 𑌚𑌾𑌭𑌿𑌧𑌾𑌂 𑌭𑌜𑌤𑌿॥

𑌕𑍁𑌵𑌲𑌯𑌾𑌨𑍍𑌯𑌪𑌿 𑌸𑌰𑌸𑌿 𑌪𑌙𑍍𑌕 𑌏𑌵 𑌜𑌾𑌯𑌨𑍍𑌤𑍇। 𑌅𑌥𑌾𑌪𑌿 𑌤𑍇𑌷𑌾𑌂 𑌨 𑌪𑌙𑍍𑌕𑌜𑌾𑌦𑌿𑌶𑌬𑍍𑌦𑍈𑌰𑍍𑌵𑍍𑌯𑌵𑌹𑌾𑌰𑌃। 𑌕𑍁𑌵𑌲𑌯𑌾𑌨𑌿 𑌕𑌮𑌲𑌾𑌕𑌾𑌰𑌾𑌣𑍍𑌯𑍇𑌵। 𑌕𑌿𑌨𑍍𑌤𑍁 𑌤𑍇𑌷𑌾𑌂 𑌨 𑌪𑌙𑍍𑌕𑌜𑌾𑌦𑌿𑌶𑌬𑍍𑌦𑍈𑌰𑍍𑌵𑍍𑌯𑌵𑌹𑌾𑌰𑌃। 𑌕𑍁𑌵𑌲𑌯𑌾𑌨𑌿 𑌕𑌮𑌲𑌾𑌕𑌾𑌰𑌾𑌣𑍍𑌯𑍇𑌵। 𑌕𑌿𑌨𑍍𑌤𑍁 𑌤𑍇𑌷𑍁 𑌸𑍌𑌗𑌨𑍍𑌧𑍍𑌯𑌂 𑌨𑌾𑌸𑍍𑌤𑌿* 𑌕𑌮𑌲𑌕𑍁𑌸𑍁𑌮𑌸𑍍𑌯𑌾𑌧𑌸𑍍𑌤𑌾𑌦𑍍𑌦𑍃𑌶𑍍𑌯𑌮𑌾𑌨𑌃 𑌪𑍍𑌰𑌕𑌾𑌣𑍍𑌡𑍋 𑌮𑍃𑌣𑌾𑌲𑌮𑍍। 𑌮𑍃𑌣𑌾𑌲𑌸𑍍𑌯𑌾𑌗𑍍𑌰𑌭𑌾𑌗𑍇 𑌛𑌿𑌦𑍍𑌰𑌾𑌣𑌿 𑌤𑌨𑍍𑌤𑌵𑌶𑍍𑌚 𑌵𑌰𑍍𑌤𑌨𑍍𑌤𑍇॥

𑌕𑌮𑌲𑌸𑌰𑌾𑌂𑌸𑌿 𑌕𑌮𑌲𑌿𑌨𑍍𑌯 𑌇𑌤𑌿 𑌕𑍁𑌮𑍁𑌦𑌸𑌰𑌾𑌂𑌸𑌿 𑌕𑍁𑌮𑍁𑌦𑌿𑌨𑍍𑌯 𑌇𑌤𑌿 𑌚𑍋𑌚𑍍𑌯𑌨𑍍𑌤𑍇। 𑌕𑌮𑌲𑌿𑌨𑍍𑌯𑌾𑌃 𑌸𑍂𑌰𑍍𑌯𑌸𑍍𑌯 𑌕𑍁𑌮𑍁𑌦𑌿𑌨𑍍𑌯𑌾𑌶𑍍𑌚𑌨𑍍𑌦𑍍𑌰𑌸𑍍𑌯 𑌚𑍋𑌦𑌯𑍇 𑌵𑌿𑌕𑌸𑌨𑍍𑌤𑌿। 𑌤𑍇𑌨 𑌸𑍂𑌰𑍍𑌯𑌃 𑌕𑌮𑌲𑌿𑌨𑍀𑌨𑌾𑌯𑌕 𑌇𑌤𑌿 𑌚𑌨𑍍𑌦𑍍𑌰𑌃 𑌕𑍁𑌮𑍁𑌦𑌿𑌨𑍀𑌨𑌾𑌯𑌕 𑌇𑌤𑌿 𑌚 𑌪𑍍𑌰𑌸𑌿𑌦𑍍𑌧𑌃। 𑌹𑍇𑌮𑌨𑍍𑌤𑍇 𑌹𑌿𑌮𑍇𑌨 𑌸𑌿𑌕𑍍𑌤𑌾𑌃 𑌕𑌮𑌲𑌿𑌨𑍍𑌯𑌃 [illegible]𑌶𑍋𑌭𑌾𑌃 𑌸𑌮𑍍𑌪𑌦𑍍𑌯𑌨𑍍𑌤𑍇॥

𑌕𑌮𑌲𑌾𑌨𑌾𑌂 𑌮𑌧𑍍𑌯𑌭𑌾𑌗𑍇 𑌕𑌿𑌞𑍍𑌜𑌲𑍍𑌕𑌾𑌃 𑌸𑌨𑍍𑌤𑌿। 𑌤𑍇𑌷𑍁 𑌸𑍁𑌗𑌨𑍍𑌧𑌃 𑌪𑌰𑌾𑌗𑍋 𑌵𑌿𑌦𑍍𑌯𑌤𑍇। 𑌮𑌧𑍁𑌕𑌰𑌾𑌃 𑌪𑍍𑌰𑌾𑌯𑍇𑌣 𑌕𑌮𑌲𑍇𑌭𑍍𑌯𑍋 𑌮𑌧𑍁 𑌪𑌿𑌬𑌨𑍍𑌤𑌿॥

𑌯𑌦𑍍𑌯𑌪𑌿 𑌮𑌲𑍍𑌲𑌿𑌕𑌾𑌦𑍀𑌨𑌿 𑌕𑍁𑌸𑍁𑌮𑌾𑌨𑌿 𑌕𑌮𑌲𑌾𑌪𑍇𑌕𑍍𑌷𑌯𑌾 𑌸𑍁𑌰𑌭𑌿𑌤𑌰𑌾𑌣𑌿 𑌤𑌥𑌾𑌪𑌿 𑌤𑍇𑌷𑌾𑌮𑍇𑌤𑌾𑌵𑌤𑍍 𑌸𑍌𑌨𑍍𑌦𑌰𑍍𑌯𑌂 𑌨𑌾𑌸𑍍𑌤𑌿। 𑌅𑌰𑌵𑌿𑌨𑍍𑌦𑌾𑌨𑍍𑌯𑍇𑌵 𑌕𑍁𑌸𑍁𑌮𑍇𑌷𑍁 𑌸𑍁𑌨𑍍𑌦𑌰𑌤𑌮𑌾𑌨𑌿। 𑌅𑌤 𑌏𑌵 𑌪𑌦𑍍𑌮𑌂 𑌪𑌦𑍍𑌮𑌾𑌯𑌾𑌃 𑌸𑌦𑍍𑌮 𑌨𑌿𑌗𑌦𑍍𑌯𑌤𑍇॥

# रूपकावली - क्रय्यम्

**Prof. VISHNU POTTY. V.S.**
Kanchipuram

**राजीवः मालती च।** मातः इत आवाम्। किं करवाव?

**वसुमतिः** अङ्गुल्या निर्दिश्य अत्र भोजनासन्दिका सज्जीकरणीया। तत्रैव भाटकत्वेनानीतां दूरदर्शनपेटिकां सम्यक् स्थापयतम्। तस्योपरि मया निर्मितं पुष्पपात्रञ्च। आच्छादनीयैषा आसन्दिका प्रावारकेण। वेला अतिक्रान्ता। हस्तौ शिरसि निधाय आत्मगतं सर्वं खलु मम शिरो लिखितम्। कतिवारमेवं करोमि। इदानीं तस्य जनः आयाति। भोजनानन्तरं वार्तालापं कृत्वा गत्वा पत्रप्रेषणं प्रतिज्ञाय सर्वे प्रतिनिवर्तन्ते।

**विश्वावसुः** (वेगेन प्रविश्य) वसुमति। वसुमति।

**वसुमती** पुरत एव किल तिष्ठामि। न दृश्यते। मृता न। न मरिष्याम्यपि।

**विश्वावसुः** प्रिये मह्यं मा कुप्यः।

**वसुमती** तर्हि कस्मै अपि?

**विश्वावसुः** विधये।

**वसुमती** तदेवैतावता क्रियते स्म। इदानीं त्वमेवासि मम विधिः।

**विश्वावसुः** श्रूयतां तावदवधानेन कर्णं दत्वा। अद्य किल कश्चन नेता आयाति वीथ्याम्। अतः आपणानि सर्वाण्यपि पिहितानि। न लब्धानि रम्भाफलनारिकेलादीनि।किं करवाणि?

**वसुमती** रघौ किल सज्जीकरणक्रिया। सः किमपि करिष्यति।

**रघुः** (शीघ्रं प्रविश्य) मातः किं सर्वं सज्ज्म्?

**वसुमती** किं सज्जीकरणीयमस्ति?

**पुनरावर्तमानेषु विफलारम्भकर्मसु।**
**वधूप्रदर्शनार्थेषु प्रगल्भाः खलु मादृशाः।।**

अतः अत्यन्तरोचितसकलसम्भारेषु व्याकुलो मा भव। तत्र मम सामर्थ्यमस्ति। किन्त्वस्मिन्वारेऽपि विफलप्रयत्ना भवेयं वेति पटपटायते मे मनः।

**विश्वावसुः** अशुभाशंसिनि। शुभं चिन्तय। (रघुमुद्दिश्य) सर्वदा अशुभवादिनी संवृत्ता तव माता।

**रघुः** एवन्न तातः। बहुविधायासायासितशरीरा किल माता। वारं वारमस्मिन्कर्मणि विफलप्रयत्ना च। अतः कदाचिन्मनोनैराश्यं स्यादेव।

**विश्वावसुः** अस्तु तावत्। कः समयः ? कदाचिद्ग्रहकालादिकं परित्यज्य प्रस्थितवन्तः अभविष्यन्।

**रघुः** एवमेव।

**विश्वावसुः** विस्मृतं मया प्रष्टुम्। किं त्वया फलताम्बूलादिकमानीतं वा? अहं तावदेतावत्पर्यट्य सर्वत्र परिश्रान्तोऽस्मि। सर्वत्र पिहितद्वारमापणं दृश्यते।

**आपणं पिहितद्वारं विधायानन्यवृत्तयः।**
**ऐन्द्रजालिकविद्यां किं पश्यन्ति नगरालयाः।।४**

**रघुः** कार्यालयादेवावगतवृत्तान्तेन मया एव सर्वं वस्तुजातमानीय प्रकोष्ठे उपस्थापितमासीत्। अहमपि वक्तुं व्यस्मरम्।

(अनुवर्तते....)

# அஷ்டாங்க ஹ்ருதயம்

**Prof. S. SWAMINATHAN**

Sri Jayendra Saraswathi Ayurveda College, Poonamallee

**भक्त्या कल्याण-मित्राणि सेवेतेतर-दूर-गः ।**

भक्त्या - பக்தியோடு, कल्याण-मित्राणि सेवेत - நற்குணங்கள் அமைந்த நல்லோருடன் கூடிப் பழகவேண்டும், इतर-दूरगः - மற்றோரை விலக்கவேண்டும்,

**हिंसा-स्तेयान्यथाकामं पैशून्यं परुषानृते।**
**पापं कर्मेति दश-धा काय-वाङ्-मानसैस्त्यजेत्।**

हिंसा - ஹிம்ஸை, स्तेय - திருட்டு, अन्यथाकामं - முறையற்ற காமம், पैशून्यं - புறங்கூறல், परुष-अनृते - கடுஞ்சொல் மற்றும் பொய்க் கூறுதல், संभिन्नालापं - முரண்பட்டப் பேச்சு, व्यापादम् - தீங்கு நினைத்தல், अभिध्यां - பிறர் பொருள் மீது விட்டுக்கொடுக்கமுடியாத அளவிற்கு ஆசை, दृग्-विपर्ययम् - நாஸ்திக எண்ணம், इति दशधा - ஆகிய பத்துவிதமான, पापं कर्म - பாபச் செயல்களையும், काय-वाङ्-मानसैः - உடல், சொல், மனம் ஆகியவற்றால், त्यजेत् - விலக்கவேண்டும்.

**விளக்கம் –** இதில் முதலில் குறிப்பிட்ட மூன்று விஷயங்கள், அதாவது ஹிம்ஸை, திருட்டு, முறையற்ற காமம் ஆகியவை உடலால் ஏற்படும் பாபச்செயல்கள் என்றும், கடுஞ்சொல், பொய், முரண்பட்ட பேச்சு ஆகியவை சொல்லால் ஏற்படும் பாபச்செயல்கள் என்றும் தீங்கு நினைத்தல், பிறர் பொருள்

மீது விட்டுக் கொடுக்க முடியாத அளவிற்கு ஆசை, நாஸ்திக எண்ணம் ஆகியவை மனதால் ஏற்படும் பாபச்செயல்கள் ஆகும். அபித்யா என்பதற்கு பிறர் பொருளைக் கவர எண்ணுதல் என்று ஹேமாத்ரி பொருள் கூறுகிறார்.

**अ-वृत्ति-व्याधि-शोकार्तान् अनुवर्तेत शक्तितः ।**
**आत्म-वत् सततं पश्येद् अपि कीट-पिपीलिकम् ।।**

अ-वृत्ति - தினப்படி வாழ்க்கைக்கே கஷ்டப்படுபவர்களையும், व्याधि - நோயினால் பாதிக்கப்பட்டவர்களையும், शोकार्तान् - மற்ற பிற துன்பங்களால் வருத்தப்படுபவர்களையும், शक्तितः- தன் சக்திக்குத் தக்கவாறு, अनुवर्तेत - உதவிசெய்யவேண்டும். कीट-पिपीलिकम् अपि - புழு, எறும்பு போன்ற சிறு உயிரினங்களைக் கூட, सततं - எப்பொழுதும், आत्म-वत् पश्येत् - தன்னைப் போன்றே கருதவேண்டும்.

**अर्चयेद् देव-गो-विप्र-वृद्ध-वैद्य-नृपातिथीन् ।**
**वि-मुखान् नार्थिनः कुर्यान् नावमन्येत नाक्षिपेत् ।।**
**उपकार-प्रधानः स्याद् अपकार-परेऽप्यरौ ।**
**संपद्-विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ।।**

देव-गो-विप्र-वृद्ध-वैद्य-नृपातिथीन् - தேவர்கள், பசுக்கள், பண்டிதர்கள், வயதானவர்கள், வைத்யர்கள், அரசர்கள், விருந்தினர்கள் ஆகியோரை, अर्चयेत् - அன்புடன் உபசரிக்கவேண்டும், अर्थिनः - ஏதேனும் உதவி வேண்டும் என்று கேட்டு வருபவர்களை, वि-मुखान् न कुर्यात् -

வெறுங்கையுடன் திருப்பி அனுப்பலாகாது, नावमन्येत - அவமானப்படுத்தவும் கூடாது, नाक्षिपेत् - திட்டுதல் கூடாது, अपकार-परे - கெடுதலை மட்டுமே செய்யக்கூடிய, अरौ अपि - எதிரிக்குக் கூட, उपकार-प्रधानः स्यात् - உபகாரம் செய்பவனாய் இருக்கவேண்டும், संपद्-विपत्सु - நன்மையிலும், ஆபத்திலும் एकमनाः - ஒரே மனதை-யுடையவனாய் இருக்கவேண்டும். அதாவது ஸம்பத் வரும்பொழுது சந்தோஷப்படுதலும், ஆபத்து வரும்பொழுது துக்கப்படுபவனுமாக இல்லாமல் ஒரே மனதுடையவனாய் இருத்தல் நலம்., हेतौ ईर्ष्येत् - காரணத்தைக் கண்டு பொறாமைப்படலாம், फले तु न (ईर्ष्येत्)- அந்தக் காரணத்தினால் ஏற்பட்ட பிறரது வெற்றியைப் பார்த்து பொறாமைப்படல் ஆகாது.

(अनुवर्तते....)

## नीतिद्विषष्टिका

**परुषैरपि वाक्छल्यैः मर्मघ्नैः कोपिता महात्मानः।**
**सलिलमिव शरत्काले स्वयमेवार्याः प्रसीदन्ति।।**

**மஹான்கள் மர்மங்களைப் பிளக்கும் கடுமையான வாக்பாணங்களால் பீடிக்கப்பட்டுக் கோபமடைந்தும் சரத்காலத்து ஜலம் போல் தாமாகவே தெளிவடைகின்றனர்.**

# करुणामृतम्

(गुरुवायुपुरेशवैभवम् - अनुवर्तते)

तामरश्शेरि शङ्करन् भट्टतिरिकृतम्

त्वं भेषजं च भिषगित्युदितं सहस्र-
नामस्तवे तदनुसृत्य निषेव्यमाणः।
वातालयेश विधुनोषि समस्तरोग-
मेनं जनं च गणयास्य निदर्शनेषु।।

मा भूज्जनिर्विविधदुःखविनोदरङ्गे
मायेन्द्रजालभरिते विततप्रपञ्चे।
इत्यर्थितोऽसि तव भक्तिरसं विचिन्त्य
वाञ्छामि तस्य विपरीतफलं प्रसीद।।

देहोऽयमीश्वर मरुन्निलयस्त्वमात्मा
जीवोहमर्पितमनास्त्वयि लब्धदास्यः।
प्रावर्त्तिका समुचिता यदि भावनेयं
प्राप्स्यामि सर्वदिशि ते भजनाऽनुभूतिम्।।

सर्वा दिशस्सुगमतावकसेवनार्था-
स्सर्वे जनास्तव पदाम्बुरुहानुरक्ताः।
सर्वा दशास्त्वदनुभावसुखावहाश्च
सन्त्यर्थनां कुरु विभो सफलां ममैताम्।।

भक्ताय दिश्युरखिलस्सफला कथं स्या-
ल्लोकप्रवृत्तिरिति चेदुदितं महद्भिः।
तोयेन वृक्ष इव मूलसमर्पितेन
त्वत्सेवया फलति नूनमशेषकर्म।।

एतान्यहानि भगवंस्तव पादपद्म-
स्यन्दन्मरन्दलहरीमधुरीकृतानि।
धन्यान्यतः परममीषु कृपाकटाक्षा-
न्मा भूत्सकृद्विषयतिक्तरसप्रवेशः।।

अङ्गेष्वधःस्थितमपि प्रचुरप्रचार-
मुत्कृष्टमेव विशदं तव पादमूलम्।
शीर्षेण यः स्पृशति तत्तदभिष्टसिद्धि-
र्निस्संशया मधुरशील नमोस्तु तस्मै।।

वातालयेश करुणामसृणैरपाङ्गै-
रानन्दिताखिलजगन्मधुरस्मितेन।
दत्ताऽभयेन च कराब्जयुगेन पूर्ण-
प्रीत्या करिष्यसि कदाऽनुगृहीतमेनम्।।

नामामृतं तव मुखे मनसि स्वरूपं
नैवेद्यमन्नमुदरे पदतीर्थयुक्तम्।
निर्माल्यमच्युत शिरस्यभिषिक्ततैल-
मङ्गे च बिभ्रदुचितं भवति त्वदात्मा।।

को वा गिरीन्द्रतनयापतिवत्त्वदीय-
भक्तोऽस्ति यस्तव समीपसरोवरस्थः।
बर्हिष्मदात्मजसमूहमधीतरुद्र-
गीतं कृतार्थमकरोदिति सुप्रसिद्धम्।।

(अनुवर्तते....

# योगरहस्यम् - १७

**Prof. S. VENUGOPALAN**
SCSVMV, Enathur, Kanchipuram

आसनविषये चर्चा प्रवर्तते। **प्रयत्नशैथिल्य - आनन्त्य (अनन्त) समापत्तिभ्याम्** इति सूत्रं चिन्त्यमानमासीत्। तत्र प्रयत्नशैथिल्यमित्यस्य बहुलायासनिवृत्तिः तन्नाम यदा आसनं बध्नामि इति साधकः मनः करोति, तदा तस्य मनसि, शरीरे, अवयवेषु आयासचिन्ता न प्रवर्तेत। अवयवानां तादृशं पाटवम् अपेक्षितं, येन यत्किमपि आसनं बन्धुमिष्टं तत् अनायासतया कर्तुम् अवयवेषु सामर्थ्यं स्यात् इति कश्चन अर्थः, कुत्रापि अवयवेषु बन्धनकाले व्यथा न उदीयात्। करचरणादीना-माकुञ्चनप्रसारणादिषु चालनेषु वा आयासः न अनुभूयेत इति तात्पर्यम्। द्वितीयोऽर्थः बाह्योन्मुखप्रवृत्तीनां परित्यागः। यदैव आसनाय अवकाशः, तदैव कार्यान्तःकरणाय मनसि प्रवृत्तैरुत्पत्तिः, न उदयेत। तादृशप्रयत्नानां मानसिकोत्साहानां सर्वेषां सर्वथा शैथिल्यकरणं प्रधानतया आसनबन्धने अनिवार्यमस्ति इति। इमं द्वितीयमर्थं वयं सदाशिवब्रह्मेन्द्राणां योगिनामग्रेसराणां योगसुधाकराख्यात् व्याख्यानात् ज्ञातुं शक्नुमः। तथैव आकाशादिगते आनन्त्ये चेतसः समापत्तिः (संलग्नता) यदा क्रियेत, तदा मनसः अपि तादृशस्वभाववत्वात् सुलभतया तादृशे आकाशे अनन्ततया विस्तृते चित्तं लीनं सत् एकाग्रतां प्राप्नुयात्। अथवा पृथिवीधारिणि स्थिरतरे अकम्प्यमाने शेषनागे चित्तं धार्यते तदापि एकाग्रता सम्पाद्येत एव। एवं द्विविधादपि अर्थात् उभयस्मिन् अपि मार्गे आसनं

सिद्ध्यतीत्यर्थः सुस्पष्टः ज्ञायते। आसनविषये सामर्थ्यसम्पादनद्वारा एव तदुपरि वर्तमानानां योगाङ्गानां विषये चिन्तयितुमपि शक्यते। योगान्तरायेषु अङ्गमेजयत्वं प्रसिद्धम्। अङ्गानि करचरणादीनि कर्मेन्द्रियाणि चञ्चलतां प्राप्नुवन्ति चित्तचाञ्चल्येन। चित्तचाञ्चल्य-प्रतिबन्धनार्थं प्राणानाम् आयामः विहितः शास्त्रेऽस्मिन्। प्राणेषु निरुद्धेषु मनोनिरोधः। मनसि निरुद्धे करचरणाद्यवयवानां निरोधः। तन्निरोधेन शरीरस्यैव चाञ्चल्यात् निवृत्तिः। तादृशे अवकाशे एव जपादिकं, ध्यानादिकं वा सिद्ध्यति। तथा च अङ्गमेजयत्वात् निवृत्यर्थम् आसनानां बन्धनं शनैः शनैः अभ्यसनीयमेव। व्यायमः आसनानां बन्धनात् पूर्वमभ्यस्तुं शक्यः। सूर्यनमस्कारादीनां शारीरिकाणाम् नित्याभ्यासात् अवयवेषु विद्यमाना जडता, स्तब्धता वा हीयेत आशिरःपादतलात् रक्तप्रवाहः अनिरुद्धः सन् शरीरे स्फूर्तिं ऊर्जां च प्रदद्यात्। अतश्च व्यायामपूर्वकया आसनानां सम्यगनुष्ठानं योगाभ्यासे पुरोगत्यर्थम् अवश्यंभावि भवति। वैदिकानां शरीराया-सजनककर्मरहितानां आसनबन्धनं स्वास्थ्यरक्षणदृष्ट्या अत्यन्तम् आवश्यकं विद्यते।

## नीतिद्विषष्टिका

**आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या।**
**यदि सत्यं कः कोपः स्यात् अनृतं किं नु कोपेन।।**

**பிறர் தூஷித்தால் புத்திமானாக இருப்பவன் தத்வார்த்தத்தை விசாரம் செய்யவேண்டும். பிறர் சொன்னது ஸத்யமாக இருந்தால் ஏன் கோபிக்கவேணும். பொய்யாக இருந்தாலோ கோபத்தால் பிரயோஜனம்?**

# कूपखानकन्यायः

**Dr. M. VINOTH**
French Institute of Pondicherry,

लोके शास्त्रे च स्वाभिप्रायसमर्थनाय वक्तव्यम् अंशं विशदीकर्त्तुं च विद्वद्भिः शास्त्रकारैश्च बहुविधदृष्टान्ताः परिकल्प्यन्ते। ते एव दृष्टान्ताः कदाचित् लोकोक्तिनाम्ना, सुभाषितनाम्ना, न्यायनाम्ना च कालान्तरे परिवर्तन्ते। न केवलं संस्कृतजगति अपि च सर्वभाषामण्डले लौकिकन्यायानां प्रयोगप्राचुर्यं दृश्यते। ग्रन्थकर्तारः शास्त्रप्रणेतारश्च स्वग्रन्थग्रथनसमये शास्त्ररचनावसरे च लौकिकन्यायान् प्राकरणिकौचित्यम् अनुसृत्य सुलभबोधनाय आश्रयन्ते। तद्रीत्या पश्यामो यदि तर्हि बहवो न्यायाः अस्माकं स्मृतिपथे आगमिष्यन्ति। यथा - रज्जुसर्पन्यायः, अन्धगजन्यायः, नीरक्षीरन्याय इत्येवमादयः। एषां न्यायानां स्थलानुगुणं प्रयोगं कृत्वा स्वाभिप्रायं प्रकटयन्ति स्म शास्त्रप्रणेतारः। तद्रीत्या व्याकरणशास्त्रे बहुषु स्थलेषु सूत्रकार्यनिरूपणावसरे बहवो न्यायाः प्रयुक्ताः। यथा - मण्डूकप्लुतिन्यायः, तक्रकौण्डिन्यन्यायः इत्येवमादयः। तेषु न्यायेषु शब्दशास्त्रस्य मुख्यमंशं निरूपयितुं कूपखानकन्यायः प्रयुक्तः।

कश्चायम् अंशः इति चेदुच्यते - शब्दस्य ज्ञाने धर्मः उत प्रयोगे इति कश्चन विचारः। अयञ्च विचारः महाभाष्ये पस्पशाह्निके वर्तते। शब्दशास्त्रमित्यभिधीयमानस्य अस्य व्याकरणशास्त्रस्य प्रयोजनं किमिति चेत् एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवति इत्युक्तरीत्या सुशब्दज्ञानेन धर्मप्राप्तिं लभते इति।

तर्हि अधुना एकस्य हि शब्दस्य बहवः अपभ्रंशाः वर्तन्ते। यथा गौरित्यस्य शब्दस्य गावी, गोणी, गोता, गोपोतलिका इत्येवमादयः बहवः अपभ्रंशशब्दाः वर्तन्ते। अधुना यः शब्दज्ञः नाम सुशब्दान् जानाति सः अवश्यम् अपशब्दान्नपि जानीयात्। तथा च अधुना गौरिति सुशब्दज्ञाने धर्मम् आप्नुयाद्यदि, तर्हि गोता इत्यादीनाम् अपशब्दानां यच्च फलमधर्मः, तदपि आप्नुयात्। तद्रीत्या एकस्य शब्दज्ञस्य नाम शब्दज्ञानवतः सुशब्दापेक्षया अपशब्दज्ञानमेव अधिकं स्यादित्यस्मात् कारणात् धर्मापेक्षया अधर्म एव भूयान् स्यात् खलु इति संशयः। यदि च सुशब्दप्रयोगे एव धर्म इत्युच्यते तर्हि यः शब्दानभिज्ञः नाम शब्दज्ञानहीनः, यश्च प्रयत्नं विना कस्मादपि शब्दज्ञपुरुषात् सुशब्दज्ञानं प्राप्य सुशब्दान्नुच्चारयति तस्यापि धर्मप्राप्तिः स्यादिति अवान्तरप्रश्नः। तस्य धर्मप्राप्तौ न मत्सरत्वं वैयाकरणानामपि तु यश्च क्रियावान् स एव खलु पण्डितः भवितुमर्हति। किञ्च यश्च प्रयत्नशीलः सः धर्मेण युक्तो भवितुमर्हति। यश्च क्रियाहीनः यश्च प्रयत्नविहीनः तस्य फलप्राप्तिः प्रयत्नानर्थक्यं परिकल्पयेत् इत्यस्मात् कथं वा निश्चयः कर्तव्यः यच्छब्दस्य ज्ञाने धर्म उत प्रयोगे इति। तत्र समाधानाय न्यायस्य अस्य प्रयोगः कृतः वर्तते।

न्यायस्य स्वरूपमेवं भवति कूपखानकन्याय इति। कूपस्य खानकः कूपखानकः इति व्युत्पत्तिः। यथा कूपखानकः कश्चन कूपं खनन् मृदा पांशुभिश्च अवकीर्णः भवत्यादौ पश्चाच्च अप्सु संज्ञासु तत एव तं गुणमासादयति नाम शुद्धत्वमाप्नोति तथा

वैयाकरणा अपि सुशब्दज्ञानप्राप्त्यनन्तरम् अपशब्दान् न प्रयुञ्जते इति सुशब्दैः प्राप्यमानेन धर्मेणैव युञ्जते। तथा चादौ अपशब्दज्ञानैरवकीर्णाः सन्तोऽपि व्याकरणाध्ययनानन्तरं सुशब्दज्ञानमवाप्य तैः सुशब्दैः प्राप्तेन धर्मेण तैरपशब्दैः प्राप्तस्य अधर्मस्य दूरीकरणं कुर्वन्ति इत्यभिप्रायः प्रकटितः। अस्य व्याख्यावेलायां कैयटाचार्यः प्रदीपव्याख्यायाम् एनां रीतिमेवं लक्षयति - **उत्कृष्टधर्मफलावाप्तौ स्वल्पम् अधर्मफलम् उत्पन्नमपि अनुत्पन्नकल्पं भवति** इति। तथा च उत्कृष्टधर्मफलावाप्तौ = सुशब्दज्ञानजन्यधर्मफलावाप्तौ, स्वल्पमधर्मफलम् = सुशब्दज्ञानात्पूर्वं विद्यमानम् अपशब्दज्ञानजन्यम् अधर्मफलम्, उत्पन्नमपि अनुत्पन्नकल्पमिति ज्ञेयम्। एवञ्च न्यायस्य अस्य प्रयोगः बहुषु स्थलेषु दरीदृश्यते। यत्र उत्कृष्टफलावाप्तौ स्वल्पमधर्मम् उत्पद्यते न्यायेनानेन तत्र धर्मत्वं साध्यते बुधैरिति शम्।।

## नीतिद्विषष्टिका

**पनसाम्रपाटलसमास्स्युः इहोत्तममध्यमाधमाः पुरुषाः।**
**फलसुमफलसुमनिचयैः कर्मवचः कर्मवाङ्निचयैः।।**

**பலா புஷ்பமில்லாமல் பழுக்கும், மா புஷ்பித்துப் பழுக்கும், பாதிரி புஷ்பத்தோடு நின்றுவிடும், பழமில்லை. அதுபோல் உத்தமர் சொல்லாமல் நன்றி செய்வர். மத்யமர் சொல்லிச் செய்வர். அதமர் சொல்வர் செய்யமாட்டார்.**

## मुक्तमौक्तिकम् - ११

Sri. SUNDARARAJAN, Retd. IAS

### स्तनन्धयमिदं महत् मदनमोहनं दैवतम्

कदाचन विमर्दयत् व्रजविलासिनीनां स्तनं
व्रजस्थलगवीपयः पिबदतश्च दध्नोऽमृतम्।
कदाचिदतिमानुषीर्विविधबाललीला ददत्
स्तनन्धयमिदं महन्मदनमोहनं दैवतम्।।

### लक्ष्मीर्दास्यति दास्यतः

सूरमण्डलमध्यस्था सुवर्णा सूरिनन्दिनी।
भगिनी भार्गवाणां सा चन्द्रा चन्द्रसहोदरी।।
रमा मारस्य माता मा लोकमाता हरिप्रिया।
त्रिवर्गमपवर्गं च लक्ष्मीर्दास्यति दास्यतः।।

### रामस्य पितृदेवत्वम्

भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः।
पट्टाभिषेकात् प्रागेवं रामं दशरथोऽन्वशात्।।
रामस्तु बाढमित्युक्त्वा पितरं नाह किञ्चन।
अन्यः कोपि तदा पुत्रः पृष्टवान् पितरं भवेत्।।
कैकेयीं परिणेष्यन् प्राक् त्वमभूः कामपीडितः।
जितेन्द्रियो भवेत्येवं नोपदेष्टुं त्वमर्हसि।।
प्रत्युत्तरप्रदः पुत्रः पितृदेवः कथं भवेत्।
वेदाज्ञा भगवद्दत्ता सा समुल्लङ्घिता भवेत्।।
रामस्स तु परंब्रह्म स्वाज्ञालङ्घी कथं भवेत्।
पितृदेवोऽभवत् रामः पित्राज्ञापरिपालकः।।

# त्रिविधमौषधम् - ५

**Sri.S.BALASUBRAMANIAN**
**Ms. B. RENGA PADMINI**
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

दैवव्यपाश्रयं युक्तिव्यापाश्रयं सत्त्वावजश्चेति त्रिविधौषधचर्चा-प्रसङ्गे इडापिङ्गलसुषुम्नाख्यनाड्यः विचारिताः। अधुना शिष्टाः एकादश वक्ष्यन्ते।

तत्रादौ वामदक्षिणमध्यभेदेन नाड्यः त्रिधा विभज्यन्ते।

**तत्र वामभागस्थितनाड्यः**

१. इडा - पूर्वं वर्णिता।

२. शङ्खिनी - शङ्खवद्भवतीति शङ्खिनी, अस्याः वामश्रोत्रेण सम्बन्धः भवति। अतः सैषा शङ्खिनी वामश्रोत्रबलप्रदा।

३. गन्धारी - गन्धारी गीतस्य मातेत्युच्यते। सैषा वामनेत्रसम्बद्धत्वात् वामनेत्रबलप्रदा भवति। अपि च असौ नाडी स्वप्नकारिणी कल्पनाशक्तिवर्धिनी च भवति।

४. हस्तिजिह्वा - हस्तिनः जिह्वा इव हस्तिजिह्वा। एषा नाडी मूलाधारचक्रादारभ्य मणिपुरचक्रं गत्वा प्राणशक्त्या वामबाहुं वामसक्थि च पोषयति।

**दक्षिणभागस्थितनाड्यः**

१. पिङ्गला - पूर्वं वर्णिता।

२. पुष्या - पुष्णाति कार्याणीति। आदित्यदेवस्वरूपवत्यां त्रवेण्यामारभ्य दक्षिणनेत्रपर्यन्तं गत्वा तत्स्थथाननि प्राणेन

अनुगृह्णाति। एषा मुख्या नाडी भवति। सैषा नाडी प्राणेन नियन्त्रिता सती जागृतावस्थायां दक्षिणनेत्रे वसति।

३. पयस्विनी - पयःपूर्णा इव पयस्विनी। एषा त्रिवेण्यामारभ्य दक्षिणनेत्रं यावत् गच्छति। कर्णनादादयः अनया एव नाड्या भवन्ति।

४. यशस्विनी - यशस्यं हितम्। यशस्विनी नाडी मूलाधारादारभ्य नाभिचक्रं यावत् भवति। प्राणशक्त्या एषा दक्षिणपादहस्तौ पोषयति। अनया एव दक्षिणपादयोः रोपणशक्तिः भवति।

**मध्यभागस्थनाड्यः**

१. सुषुम्ना - पूर्वं वर्णिता।

२. अलम्बुषा - एषा भित्तिरूपेण तिष्ठति। स्वाधिष्ठानचक्रात् मूलाधारं गत्वा गुदं प्राणशक्त्या प्रसादयति, अपानवातस्य कर्म च करोति।

३. कुडु - गुप्तचन्द्रः इव। स्वाधिष्ठानचक्रात् मेढ्रं तथा योनिप्रदेशं प्राणशक्त्या अवलम्बयति। एषा अपि अपानवासतस्यैव कार्याणि करोति।

४. विश्वाधारा - विश्वं धारयतीति। मणिपुरचक्रादारभ्य आमपक्काशये महास्रोतश्च प्राणशक्त्या प्रसादयति। समानाख्यवातस्य कार्याणि एषा करोति।

५. वरुणा - आनाहतचक्रादारभ्य सर्वं शरीरं व्याप्य त्वचा बहिर्गच्छति व्यानवातस्य कार्याणि च करोति।

६. सरस्वती (वाङ्माता) - विशुद्धचक्रात् जिह्वायै प्राणं ददाति।

उदानवातस्य कार्याणि करोति। एषा वाक्प्रवृत्तिं मन्त्रोच्चारणं च करोति।

पञ्चेन्द्रियाणि पृथक्पृथक् नाडीषु भवन्ति। तद्यथा -

श्रवणेन्द्रियम् - यशस्विनी, शाखिनी

स्पर्शनेन्द्रियम् - वरुणा

चक्षुरिन्द्रियम् - गान्धारी, पयस्विनी

रसनेन्द्रियम् - सरस्वती

घ्राणेन्द्रियम् - पिङ्गला, इडा

पञ्च कर्मेन्द्रियाण्यपि पृथक् पृथक् नाडीषु भवन्ति। तद्यथा -

वागिन्द्रियम् - सरस्वती

पाण्यौ पादौ च - यशस्विनी, हस्तिजिह्वा

गुदम् - अलम्बुषा

उपस्थम् - कुडु

शिरसि सप्त खानि भवन्ति - नासिके द्वे, कर्णौ द्वौ, नेत्रे द्वे तथा मुखमेकमिति। सप्त ऋषयः एतानि बोधयन्तीति उच्यते। सप्त प्राणाः तथा सप्त आदित्याः अपि वक्ष्यन्ते - विविधप्राणाधिकरणतया तथा विविधप्रकाशकात्मकत्वाच्च।

अधःशरीरे गुदं मेढ्रश्च भवतः। नाभिना अधिपतिना च सह एकादश बहिर्मुखाः नाड्यः भवन्ति। हस्तौ पादौ त्वक् चेति मिलित्वा चतुर्दश समाप्यन्ते।

इति नाडिशारीरमुक्त्वा अग्रिममासे नाडीषट्चक्रसंबन्धं तथा षट्चक्रविस्तारं पश्यामः।

(अनुवर्तते....)

## शब्दविमर्शः - ७ डुकृञ् धातोरनेकार्थकप्रयोगाः

**Dr. V. R. MANOJ**
Chinmaya International Foundation, Veliyannad, Kerala

अनुज्ञायां विस्ताराङ्गीकरणयोश्च ऊरीकरोति - ऊरीकुरुते। उररीकरोति-उररीकुरुते। ऊररीकरोति - ऊररीकुरुते। अङ्गीकरोति - अङ्गीकुरुते। [to accede, agree to, allow, approve, assent, authorize, consent to, permit, amplify, develop, enlarge, expand, get bigger etc.]

**ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातमित्यमरः। ऊरी उररी ऊररी अङ्गी इत्येतेभ्यः परः कृञ् धातुः। ऊर्यादिच्विडाचश्च** (१.४.६१) इति ऊरीत्यादीनां **गतिसंज्ञायां कुगतिप्रादयः** (२.२.१८) इति समासः। अङ्गीकरोति अङ्गीकुरुते इत्यत्र अनङ्गमङ्गं करोतीत्यर्थः। अभूततद्भावे इत्यनुवर्त्य कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः (५.४.५०) इति च्विप्रत्यये अङ्गी इत्यस्मात्परः कृञ् धातुः। **कुण्डिनेन्द्रसुतया किल पूर्वं मां वरीतुमुररीकृतमास्ते** इति श्रीहर्षः (नैष.५.११४)।

अन्तर्धौ तिरस्करोति - तिरस्कुरुते । [to disappear, cover up, hide etc.]

अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् अपिधानतिरोधानपिधानाच्छादनानि चेत्यमरः। तिरस् इत्यस्मात्परः कृञ् धातुः। तिरस् इत्यव्ययम्। **स्वरादिनिपातमव्ययम्** (१.१.३७) इत्यनेन सङ्गृहीतत्वात्। **तिरसोऽन्यतरस्याम्** (८.३.४२) इति विकल्पविधानात्पक्षे तिरःकरोति-तिरःकुरुते। अनादरेऽर्थे तिरस्करोति - तिरस्कुरुत इति पूर्वं प्रतिपादितम्।

तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान्नृप इति भारविः (किरा.११.७७) अन्यथात्वेऽसकृत्कृतेऽर्थे मिथ्याकारयते। [to deviate from the set course, not do as destined or designed, errfrequently]

**मिथ्येत्यव्ययम् स्वरादिनिपातमव्ययम्** (१.१.३७) इत्यनेन सङ्गृहीतत्वात्। मिथ्योपपदात् कृञ् धातोः ण्यन्तात् मिथ्योपपदात्कृञोऽभ्यासे (१.३.७१) इत्यात्मनेपदम्। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

अभिभवेऽर्थे न्यक्करोति। अधिकुरुते। [to defeat, conquer, ascertain authority, overpower, etc.]

आत्तगर्वोऽभिभूतः स्यादित्यमरः। न्यक्करोतीत्यत्र निपूर्वः अञ्चु गतौ याचने च (भ्वा.८६३) इति धातुः। अचु इत्येके। अचि इत्यपरे। **अस्मात् ऋत्विग्दधृक्स्रग्** (३.२.५९) इत्यादिना क्विन्। **अनिदितां हल उपधायाः क्ङिति** (६.४.२४) इति नलोपे कुत्वे च न्यक् इत्यस्मात्परः कृञ् धातुः। अधिकुरुते इत्यधिपूर्वः कृञ् धातुः। क्षान्तावर्थे अधिकुरुते इति वक्ष्यते।

आदरेऽर्थे सत्करोति। [to respect, admire, appreciate, value, venerate, worship, etc.]

आदृतौ सादरार्चितावित्यमरः। अस भुवि इत्यस्माद्धातोः लटः शत्रादेशे श्नसोरल्लोपः (६.४.१११) इति धातोरकारलोपे प्रातिपदिक-विभक्तिकार्येषु सत् इति जायते। सत्पूर्वः कृञ् धातुः।

उत्पकृष्टावर्थे बीजाकरोति - बीजाकुरुते। [to plough or

## शब्दविमर्शः - ७ डुकृञ् धातोरनेकार्थकप्रयोगाः

Dr. V. R. MANOJ
Chinmaya International Foundation, Veliyannad, Kerala

अनुज्ञायां विस्ताराङ्गीकरणयोश्च ऊरीकरोति - ऊरीकुरुते। उररीकरोति-उररीकुरुते। ऊररीकरोति - ऊररीकुरुते। अङ्गीकरोति - अङ्गीकुरुते। [to accede, agree to, allow, approve, assent, authorize, consent to, permit, amplify, develop, enlarge, expand, get bigger etc.]

**ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातमित्यमरः। ऊरी उररी ऊररी अङ्गी इत्येतेभ्यः परः कृञ् धातुः। ऊर्यादिच्विडाचश्च** (१.४.६१) इति ऊरीत्यादीनां **गतिसंज्ञायां कुगतिप्रादयः** (२.२.१८) इति समासः। अङ्गीकरोति अङ्गीकुरुते इत्यत्र अनङ्गमङ्गं करोतीत्यर्थः। अभूततद्भावे इत्यनुवर्त्य कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः (५.४.५०) इति च्विप्रत्यये अङ्गी इत्यस्मात्परः कृञ् धातुः। **कुण्डिनेन्द्रसुतया किल पूर्वं मां वरीतुमुररीकृतमास्ते** इति श्रीहर्षः (नैष.५.११४)। अन्तर्धौ तिरस्करोति - तिरस्कुरुते । [to disappear, cover up, hide etc.]

अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् अपिधानतिरोधानपिधानाच्छादनानि चेत्यमरः। तिरस् इत्यस्मात्परः कृञ् धातुः। तिरस् इत्यव्ययम्। **स्वरादिनिपातमव्ययम्** (१.१.३७) इत्यनेन सङ्गृहीतत्वात्। **तिरसोऽन्यतरस्याम्** (८.३.४२) इति विकल्पविधानात्पक्षे तिरःकरोति-तिरःकुरुते। अनादरेऽर्थे तिरस्करोति - तिरस्कुरुत इति पूर्वं प्रतिपादितम्।

तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान्नृप इति भारविः (किरा.११.७७) अन्यथात्वेऽसकृत्कृतेऽर्थे मिथ्याकारयते। [to deviate from the set course, not do as destined or designed, errfrequently]

**मिथ्येत्यव्ययम् स्वरादिनिपातमव्ययम्** (१.१.३७) इत्यनेन सङ्गृहीतत्वात्। मिथ्योपपदात् कृञ् धातोः ण्यन्तात् मिथ्योपपदात्कृञोऽभ्यासे (१.३.७१) इत्यात्मनेपदम्। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

अभिभवेऽर्थे न्यक्करोति। अधिकुरुते। [to defeat, conquer, ascertain authority, overpower, etc.]

आत्तगर्वोऽभिभूतः स्यादित्यमरः। न्यक्करोतीत्यत्र निपूर्वः अञ्चु गतौ याचने च (भ्वा.८६३) इति धातुः। अचु इत्येके। अचि इत्यपरे। **अस्मात् ऋत्विग्दधृक्स्रग्** (३.२.५९) इत्यादिना क्विन्। **अनिदितां हल उपधायाः क्ङिति** (६.४.२४) इति नलोपे कुत्वे च न्यक् इत्यस्मात्परः कृञ् धातुः। अधिकुरुते इत्यधिपूर्वः कृञ् धातुः। क्षान्तावर्थे अधिकुरुते इति वक्ष्यते।

आदरेऽर्थे सत्करोति। [to respect, admire, appreciate, value, venerate, worship, etc.]

आदृतौ सादरार्चितावित्यमरः। अस भुवि इत्यस्माद्धातोः लटः शत्रादेशे श्नसोरल्लोपः (६.४.१११) इति धातोरकारलोपे प्रातिपदिक-विभक्तिकार्येषु सत् इति जायते। सत्पूर्वः कृञ् धातुः।

उत्पकृष्टावर्थे बीजाकरोति - बीजाकुरुते। [to plough or

harrow with seed, sow with seed]

बीजाकृतं तूप्तकृष्टमित्यमरः। बीजेन सहकृतं कृष्टम्। वज गतौ (भ्वा.२५२)। **अस्मात् नन्दिग्रहिपचादिभ्यो लुणिन्यचः** (३.१.१३४) इत्यच्। **पृषोदरादीनि यतोपदिष्टम्** (६.३.१०९) इत्यस्याकृतिगणत्वात्साधुत्वे वबयोरभेदे बीजम्। **कृञो द्वितीयतृतीयशम्बबीजात्कृषौ** (५.४.५८) इति बीजशब्दात् डाच्प्रत्यये अनुबन्धलोपे बीजा इत्यस्मात्कृञ् धातुः। उभयतोभाषः।

करिणः शब्दे चीत्करोति - चीर्कुरुते। [to trumpet] दन्ती दन्तावलो हस्ती द्विरदोऽनेकषो द्विपः मतङ्गजो गजो नागः कुञ्जरो वारणः करी इभः स्तम्बेरमः पद्मी इत्यमरः। चीत् पूर्वः कृञ् धातुः। चीदित्यनुकरणपरमव्ययम्। अनुकरणञ्चानितिपरम् (१.४.६२) इत्युपपदस्य चीत् इत्यस्य गतिसंज्ञा।

कार्मुकस्य शब्दे टङ्करोति - टङ्कुरुते। [the sound of the bow-string, accompanied by a great noise, howl, clang, twang]

धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् इष्वासोऽपीत्यमरः। टङ्कारो नाम चापध्वनिः। अथवा ज्याकृष्टविकृष्टध्वनिः। टम् पूर्वः कृञ् धातुः। टमित्युपपदस्य अनुकरणशब्दत्वात् अनुकरणञ्चानितिपरम् (१.४.६२) इति गतिसंज्ञा। **कार्मुकेणेव गुणिना बाणः सन्धानमेष्यति** इति माघः। (शिशु.२.९७)

(अनुवर्तते....)

# शास्त्रं ज्योतिः प्रकाशार्थम्

**Ms. DHWANI J.**
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

नमः संस्कृतसेवकेभ्यः ! सर्वेभ्यो नमववत्सरशुभकामनाः, शुभाभुलाषिण्यः प्रार्थनाश्च। भारतीभारतयोः लग्नमनस्केभ्यस्तु यद्यपि जनवरी १ इति दिनाङ्कः नववत्सरप्रारम्भरूपेण न कदाचित् वैशिष्ट्यं प्राप्नुयात्, तथापि नवं किञ्चित् कर्तुं शुभरूपेण दिनस्यैतस्य दर्शनं न दोषाय इति चिन्त्यते, यतो हि उत्तमजनाः खलु सर्वदा शुभकर्मकरणार्थम् अवसरदर्शने जागरूकाः एव।

२०१८ संवत्सरे शुभसाधकेभ्यः अभिनन्दनानि। तेभ्यश्च तद्विपरीतेभ्यश्चापि एतत् कथ्यते - गतं तु गतमेव।

उच्यते हि चरकेण - .

**निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये।**
**भग्नानां न पुनर्भावः कृतं नान्यमुपैति च।।**
**मतं तत्त्वविदामेतद्यस्मात्तस्मात्स कारणम्।**
**क्रियोपभोगे भूतानां नित्यः पुरुषसंज्ञकः।।**

(चरकसंहिता - शारीरस्थानम् - १.५०, ५१)

शीर्यते इति शरीरम्। शरीरमिदं प्रतिदिनम्, अपि तु प्रतिक्षणं स्वाग्निनैव पच्यमानं सत् शीर्यते एव। अयं विनाशकालस्तु निमेषकालादपि शीघ्रतरः उच्यते। शरीराग्निना भग्नानां शीर्यमाणानां शरीरभावानां न पुनर्भावः भवतीत्युच्यते। तथा सतौ कृतकर्मणः कालेन पाकानन्तरं फलप्राप्तिं यावत् शरीरमिदं न तिष्ठेत्, अतः

अनेन शरीरेण कृतस्य कर्मणः फलं न तदेव शरीरं भुङ्क्ते इति आशङ्कावसरे स्पष्टीक्रियते - कृतं नान्यमुपैति च इति। यतो हि कर्ताऽत्र पुरुषः आत्मा, न खलु यन्त्रमात्रं शरीरं कर्तृसंज्ञकं भवति। अतः क्रियोपभोगे क्रियाणां फलभोगे नित्यः पुरुषसंज्ञकः आत्मा एव अधिकारी। नान्यमिदं फलमुपैतीति भावः।

गतसंवत्सरे शुभाणि वाप्यशुभाणि वा कर्माणि कृतानि अधुना अतीतकालानि। तत्फलं पुनः शुभं वाप्यशुभं वा कर्त्रा एव भोक्तव्यमिति चेदपि, नवोऽयं संवत्सरः प्रारब्धः, नवश्च सूर्यः उत्थितः, नवश्चासौ कर्मावसरः समागतः इति कृत्वा परहिताय आत्महिताय च पुनरपि यत्नः आरभणीयः इति दृढः आग्रहः क्रियते।

कः तर्हि नवसमारम्भाय सुष्ठु उपायः स्यादिति चेत्,न कदाचित् विद्यायाः परं किञ्चित् स्यात्किल? यस्मिन् पुस्तके शास्त्रे वा बहुकालादेव पठितुमिच्छा आसीत्, यस्य पुनः पठनाय सुष्ठु अवसरः न वा प्राप्तः आसीत्, यस्मिन् वा ज्ञानक्षेत्रे अभिरुचिः स्यात्, तद्धस्ते गृहीत्वा अधीतुम् आरभेमहि। सत्यं हि न शास्त्रज्ञानात् परतरं किञ्चित् अज्ञानतिमिरापहं स्यात्। उच्यते हि वैद्यकीयशास्त्रे - शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः (चरकसंहिता - सूत्रस्थानम् - ९.२४) इति।

नव्यतया पठितुं किं शास्त्रं चिनुयाम इति चेत्, चरकसंहितायां ग्रन्थचयने मार्गदर्शकं किञ्चित् कथनमत्र विलिख्यते। यद्यपि कथनमिदं भिषक्शास्त्रचयने एव विशेषरूपेण कथितः, तथाप्यत्र सङ्गताः सर्वेऽपि विषयाः सर्वशास्त्रव्यापकाः एव इति कृत्वा सर्वेभ्यः

अवलोकनीयमिदमिति विचार्यते। तद्यथा -

**तत्र यन्मन्येत सुमहद्यशस्विधीरपुरुषासेवितमर्थबहुल-माप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसङ्ग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वविनिश्चयप्रधानं सङ्गतार्थ-मसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च, तदभिप्रपद्येत शास्त्रम्। शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वम्।।** (चरकसंहिता - विमानस्थानम् - .)

वाक्यमिदं विचार्यते। सुमहद्यशस्वि च धीरपुरुषासेवितं च; किंवा सुमहद्यशस्विधीरपुरुषैरासेवितमिति विग्रहः (चक्रपाणिः)। सत्यम् - यच्छास्त्रं पूजनीयजनैः सेवितं पूजितं वा, तदवश्यं पठ्यमेव, न खलु दोषयुक्तं दुर्मार्गबोधकं वा शास्त्रं विद्वद्भिः शंस्यते। तथैव आप्तजनपूजितम् इत्युक्तलक्षणस्यापि तात्पर्यम्। त्रिविधशिष्य-बुद्धिहितमिति पदं व्याख्याकारेण चक्रपाणिदत्तेन विव्रियते- **उत्कृष्ट-मध्याल्पबुद्धयस्त्रिविधाः शिष्याः** इति। ननु प्राचीनकालापेक्षया अद्य जनाः भूयोऽपि स्वल्पबुद्धयः एव इति चिन्त्यते, उत्कृष्ट-मध्यबुद्धयस्तु कदाचित् न्यूनाः एवाधुना दृश्यन्ते। शास्त्रलेखनकाले यत् त्रिविधशिष्यहिताय आसीत्, तदेव अधुना प्रायशः अवगन्तुं सुलभं स्यादिति चिन्त्यते। अन्यथा तु पुरातनग्रन्थानां विषयवैशाल्यमस्मद्दृशानां बुद्धेः उपरि उड्डयनं कृत्वा गच्छेत् एव! आर्षमिति ऋषेः इदम् आर्षम्। ऋषयः खलु आप्ताः रजस्तमोविमुक्ताः। तेषां कथने अस्माकं विश्वासः भवतीत्यतः आर्षं शास्त्रं शंस्यते

विद्वद्भिः। अपगतपुनरुक्तदोषमिति यस्मिन् ग्रन्थे न पौनरुक्त्याख्यो दोषः स्यात्। अत्र चक्रपाणिना पुनरुक्तिविषये वर्णयता कश्चित् श्लोकः स्मर्य्यते -

**अधिकरणवशाद्दुर्गाद्गुणदोषप्राप्तितोऽर्थसम्बन्धात्।**
**स्तुत्यर्थं संशयतः शिष्यधियां चाभिवृद्ध्यर्थम्।।**
**अल्पतोऽन्तरितत्वाद्विशेषणेष्वपि च तन्त्रकृद्भिस्तु।**
**यत्तन्त्रे स्यात्पुनरुक्तं नेष्यते तद्विभाव्य विवरणम्।।** इति।

यत्र तु लेखकः अधिकरणवशात् प्रसङ्गागतत्वात् किञ्चित् पूर्वोक्तं स्मारयति, न तत्र पुनरुक्तिः दोषाय स्यादिति भावः। तथैव दुर्गात् दुःखावगमनदूरीकरणाय पुनरुक्तिः न दोषाय भवति। एवमेव गुणदोषप्राप्तितः, अर्थसम्बन्धाद्वा। स्तुत्यर्थं तु बहुशः ग्रन्थेषु स्तोत्रेषु वा वर्णितदेवाय देव्यै वा नमः उच्यते, न तत्र पौनरुक्त्यम्। यत्र वा क्वचित् स्वल्पवचनैः कथनेन संशयोत्पत्तिः संभवेत्, तत्र पुनः तत्परिहर्तुं कस्यचिद्विषयस्य द्विरुक्तिः पठितॄणां सुबोधकत्वायैव, न दोषाय। तथैव यदि कश्चिद्विषयः प्रथमप्रसङ्गात्पश्चात् कुत्रचित् पुनः लेखकेन शिष्यबुद्धिहितं दृश्यते, तत्रापि न दोषः। यतो हि क्वचित् क्वचित् पठित्रा अवगतपाठेऽपि पूर्वः कश्चिद्विषयः तत्प्रसङ्गे स्मर्य्यते चेत्, नवः कश्चिदुपायः मनसि उत्तिष्ठेत्। तदर्थम् अनुकथनमपि न दोषाय। एवंविधे पौनरुक्त्यै न विवरणमिष्यते इति भावः।

स्वाधारमिति शोभनाभिधेयम् (चक्रपाणिः)। यस्मिन्नेव ग्रन्थे तद्ग्रन्थावबोधकाः सर्वेऽपि विषयाः अन्तर्भूताः स्युः स ग्रन्थः स्वाधारः, यस्य वा ग्रन्थस्य सुष्ठु आधारः भवति स वा स्वाधारः।

आध्रियन्तेऽस्मिन्नित्याधारः (शब्दकल्पद्रुमः)। ग्रन्थोक्तविषयाः न निर्मूलाः स्युः, अपि च सुष्ठु आधारसहिताः स्युः इति पदमिदम् अवगम्यते। अनवपतितमिति अग्राम्यशब्दम् (चक्रपाणिः)। अवश्यम् - नैव दुश्शब्दप्रयोगान् ज्ञातुमुत्सुका वयम्! अकष्टशब्दमिति अकृच्छ्रोच्चार्यशब्दं, किंवा प्रसिद्धाभिधेयशब्दम् (चक्रपाणिः)। एतत्पुनः साधु अवगमनायैव। यतो हि भूयशः क्लिष्टशब्दप्रयुक्ते ग्रन्थे त्रिविधशिष्यबुद्धिसुगमता न स्यात्, अथवा न प्रायो जनानां तत्र निश्चला रुचिः तिष्ठेत्। पुष्कलाभिधानमिति सम्यगर्थसमर्पकवाक्यम् (चक्रपाणिः)। स्पष्टमेतत्। क्रमागतार्थमिति परिपाट्यागतार्थम् सङ्गतार्थमिति प्रतिपादितार्थम् असङ्कुलप्रकरणमिति अमिश्रीभूतप्रकरणम् (चक्रपाणिः) त्रीण्येतानि लक्षणानि परस्परावबद्धानि भान्ति। यत्र क्रमेणैव पाठः सुलभः, न इतस्ततः अवगमनार्थं परिपठनं यत्र अपेक्षितं तत् क्रमागतार्थं शास्त्रम्। सङ्गतार्थमिति यस्यैव पठनात् तात्पर्यं मनसीक्रियते। असङ्कुलप्रकरणम् अमिश्रीभूतप्रकरणमिति न पूर्वप्रसङ्गे कथितव्यं किञ्चित् अपरस्मिन्नध्याये क्वचिदन्यत्र वा कथितं यत्र, यत्र प्रकरणशः ग्रन्थगर्भाः विषयाः विभक्ताः स्युः तच्छास्त्रम् असङ्कुलप्रकरणम्। आशुप्रबोधकमिति नावगमनाय क्लिष्टः प्रयत्नः अपेक्षितः यत्र तच्छास्त्रमाशुप्रबोधकम्। लक्षणवदित्यादि। तत्तच्छास्त्रे यद्यल्लक्षणमुच्यते, तत्तद्बोधकं ग्रन्थं लक्षणवदुच्यते। तथा यत्र यत्र लिखितविषयावगमनाय उदाहरणस्य आवश्यकता उत्तिष्ठति, तत्र तत्र दृष्टान्तकथनं यस्मिन् शास्त्रे, तच्छास्त्रमुदाहरणवदुच्यते।

सर्वैरेतैरुक्तगुणैः सम्पन्नं यच्छास्त्रं तदेव सर्वज्ञानप्रकाशकमुच्यते, यथा अमलः आदित्यः। अमलः अत्र मेघादिभिः अनावृतः एव, यतो हि अग्निमयस्य सूर्य्यस्य नान्यथा अविशुद्धिर्विद्यते। यथा अमलः आदित्यः तमः अन्धकारं विधूय सर्वं प्रकाशयति, एवमेव गुणयुक्तमेवंविधं शास्त्रम् अज्ञानं विनाश्य सर्वं मार्गं ज्ञानं च प्रदर्शयति। अत एव उच्यते शास्त्रं ज्योतिः प्रकाशार्थं दर्शनं बुद्धिरात्मनः इति। ननु आत्मनः दर्शनं चक्षुः बुद्धिः एव। बुद्धिं विना न किञ्चिद्बाह्यलोकभावम् अवगन्तुं समर्थः आत्मा। विषयग्रहणे इन्द्रियाणि प्रथमानि, ततः मनः, ततश्च बुद्धिरिति क्रमः ग्रन्थेषु वर्णितः। तदिह प्रसङ्गबाह्यत्वात् न विस्तीर्यते।

अधुना, कुतो विलम्बः? नवसंवत्सरस्य शुभारम्भं नवग्रन्थपठनेन कुर्वीमहि। मया चितं, मह्यं चितं वा यच्छास्त्रमायुर्वेदाख्यं, तत्र स्थिताः संस्कृतप्रेमकेभ्यः रोचकाः विषयाः इतोऽपि प्रदर्शयिष्यन्ते। तावच्छुभम्।।

## नीतिद्विषष्टिका

**न भवति भवति च न चिरं भवति चिरं चेत् फले न संभवति।**
**कोपस्सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम्।।**

**பெரியோருக்குக் கோபம் வராது. வந்தால் நெடுங்காலம் இருக்காது. அப்படி இருந்தால் பலன் கொடாது (கெடுதி செய்யாது) இது நீசர்களின் ஸ்நேஹம் போலாம். அதுவும் ஏற்படாது ஏற்பட்டால் க்ஷணிகம். நின்றால் பயன் கொடாது.**

# अलङ्कारसामान्यपरिचयः

**Sri. R. BHARANIDHARAN**
Research Scholar, SCSVMV, Enathur, Kanchipuram

अलङ्कृतिरसावलङ्कार इति व्युत्पत्तौ अलं पूर्वक कृञ् धातोः निष्पन्नस्य अलङ्कारशब्दस्य सौन्दर्यमर्थः। अलङ्क्रियते अनेनेति करणव्युत्पत्तौ अलङ्कारशब्दः यमकोपमादिवाचकः। अत एव वामनः **काव्यं ग्राह्यमलङ्काराद्** (काव्यालङ्कारसूत्रम् १.१.१) इत्यत्र अलङ्कारशब्दं द्विधा व्युत्पादयति। सौन्दर्यमलङ्कारः। अलङ्कृतिरलङ्कारः, करणव्युत्पत्त्या पुनरलङ्कारशब्दोऽयमुपमादिषु वर्तते। (काव्यालङ्कारसूत्रम् १.१.२)

शब्दात्मकं शब्दार्थोभयात्मकं वा कव्यशरीरं भवतु परन्तु तस्य रमणीयत्वविषये नास्ति विप्रतिपत्तिः। शरीरं विना शरीरिणोऽ-नवस्थानादस्ति तस्यापि वैशिष्ट्यम्। दोषाभावविशिष्टमपि काव्यशरीरं लोक इव सौन्दर्यसाधनमवश्यमपेक्षते। काव्यात्मविषये सत्यपि मतभेदे दण्डि-भामह-उद्भट-वामन-रुय्यकानन्दवर्धनादयः यमकोपमादीनाम् अलङ्काराणां सौन्दर्यजनकत्वे ऐकमत्यं प्रकटीचक्रुः।

एतादृशस्य अलङ्कारस्य लक्षणविषये तावत् निरुक्तकारो यास्काचार्यः प्रथम इवाभाति। सः निरुक्ते तृतीयाध्यायस्य तृतीयपादे उपमालक्षणं प्रदशयत्। यथा- **तदासां कर्म जयायसा वा गुणेन प्रख्याततमेन वा कनीयासं वाऽप्रख्यातं वोपमिमीते** (निरुक्तम् ३.३) इति। किञ्च तत्र रूपोपमादयः केचन उपमाप्रभेदाः। न केवल्मेते, किन्तु लुप्तोपमाया अपि स्वरूपं तत्र निरूपितम्। यथा यत्र सादृश्यप्रतिपादकस्य इवादेरभावेऽपि अर्थसामर्थ्यबलात् सादृश्यमुन्नीयते तत्र अर्थोपमेति ग्राह्यमिति अस्या एव नामान्तरं लुप्तोपमेति।

भरतेन नाट्यशास्त्रे यद्यपि उपमादयश्चत्वार एवालङ्कारा निरूपिताः,

**उपमा दीपकञ्चैव रूपकं यमकं तथा।**
**अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।**

(नाट्यशास्त्रम् १७.४३)

तथापि तस्य **नाट्यसम्बन्धिषट्त्रिंशल्लक्षणेषु** (नाट्यशास्त्रम् १५.२९२) हेतुदृष्टान्तसंशयनिदर्शनार्थापत्तिश्लेषसिदध्यादय ये उक्तास्ते तदुत्तरवर्त्याङ्कारिकैरलङ्कारत्वेन स्वीकृताः।

एवं नाट्यशास्त्रे अलंङ्कारचतुष्टयेनारबधोऽलङ्कारवर्ग इदानीं शताधिकसंख्यां भजन् विकासपदीमधीरोहति। एतन्मतप्रधानप्रवर्तकोः भामहः। आचार्योऽयं काव्यलङ्कारग्रन्थे अलंङ्काराणां प्रधान्यमुररीकृतवान्। उक्तं तेन - **न कान्तमपि निर्भूषं विभाति वनितामुख** (काव्यालङ्कारः १.३) मिति। कान्तमपि कान्तामुखं भूषणैर्विना यथा न प्रकाशते तथा रमणीयमपि इतिवृत्तमलङ्कारैर्विना शोभां न प्रापनोतीति तदभिप्रयः। अतः अलङ्कारा एव काव्यसौन्दर्यापादका इति। दण्ड्यादयोऽपि तमेवाभिप्रायं पोषयन्तोऽलङ्कारान् व्याचख्युः।

### नीतिद्विषष्टिका

**नीचजनजनितमन्युः क्रुद्धोऽपि न विप्रियं वदत्यार्यः।**
**न हि राहुवदनदष्टश्चन्द्रश्शैत्यं परित्यजति।।**

**பெரியோர்கள் நீசர்கள் செய்யும் சேஷ்டைகளால் கோபித்துக் கொண்டாலும் அப்பிரியமான வார்த்தைகள் சொல்லமாட்டார்கள். ராகு சந்திரன் வாயில் விழுந்தாலும் தன்னுடைய குளிர்ந்த ஸ்வபாவத்தை விடுகிறானா?**

# पदरञ्जनी - ६

**Dr. N. SRIDHAR,**
**SCSVMV, Kanchipuram**

(अस्य समीचीनमुत्तरं editorsamskritasri@gmail.com प्रति ई-मैल् कर्तुमपि शक्नुवन्ति। समीचीनोत्तरप्रदातॄणां नामप्रकाशनम् अग्रिमसञ्चिकायाम्।)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 1 | | 2 | | | 3 | | 4 | 5 | |
| | | | | 6 | | | | | |
| | 7 | | 8 | | | | 9 | | 10 |
| 11 | | 12 | | 13 | | | | | |
| | 14 | | | | | 15 | | | |
| 16 | | | | | 17 | | | | |
| 18 | | | 19 | 20 | | | | 21 | |
| | | 22 | | 23 | 24 | | | | |
| 25 | 26 | | 27 | | | | 28 | | |
| 29 | | | | | | 30 | | | |
| 31 | | | 32 | | | 33 | | | 34 |
| | | 35 | | | 36 | | 37 | 38 | |
| | 39 | | 40 | | | | | 41 | |

## वामतः दक्षिणम्

१. इच्छा (४)

४. सहदेवस्य सहोदरः, सर्पशत्रुः (३)

६. जलम् (३)

८. चञ्चलः (तत्पर्यायवाची सम्बोधने) (३)

९. न्यूनः (तत्पर्यायवाची सम्बोधने) (३)

११. शप्-धातोः कर्तरि लट् म.पु. एक.व. आत्मनेपदी (३)

१३. वायुः, पक्षी (२)

१४. गव्यविशेषः (४)

१५. पद्ममूलम् (४)

१६. भा-धातोः भाववाच्ये लट् प्र.पु. एक.व. आत्मनेपदी (३)

१७. ब्रह्मणः मानसपुत्रः देवर्षिश्च (३)

१८. प्रमाणम्, परिमाणम् (२)

१९. स्वकीयः (तत्पर्यायवाची सम्बोधने) (२)

२१. भ्रमरः (२)

२३. अधो लोकः (३)

२५. पक्षीविशेषः, कृष्णेन मारितः असुरः (तत्पर्यायवाची सम्बोधने) (२)

२७. शोकादिभिः त्रस्तः (३)

२८. पुष्पधूलिः (३)

२९. सुन्दरी, पराशक्तिः (३)

३०. द्विप्रकारका (३)

३१. पूर्णचन्द्रः (२)

३२. राम - द्वि.वि. - एक.व. (२)

३३. पर्णम् (तत्पर्यायवाची सम्बोधने) (२)

३५. हे मूढमते ! गोविन्दं ........ इति आदिशङ्कराचार्याणाम् उपदेशः। (२)

३७. देशविशेषः (३)

४०. कादम्बर्याः पात्रम् (४)

४१. पर्वतः, धारकः (२)

**उपरिष्ठात् अधः**

१. सर्पः (२)

२. देशविशेषः, अस्य नाम्ना कश्चन अलङ्कारः प्रसिद्धः (२)

३. कदलीवृक्षः (४)

५. गजः (तत्पर्यायवाची सम्बोधने) (३)

६. वामस्कन्धार्पितं यज्ञसूत्रम् (४)

७. गुरुशिष्ययोः सान्निध्याय संस्कारविशेषः (५)

९. कोविदः, विद्वान् (४)

१०. भालः (३)

१२. सेव्-कर्तरि लट् प्र.पु. एक.व. आत्मनेपदी (३)

१५. हस्तरेखान्तर्गत-भागः (४)

१६. कुपिता स्त्री (२)

२०. पुष्पविशेषः (५)

२१. सप्तविंशतिनक्षत्रेषु अन्यतमम् (४)

२४. वृक्षविशेषः (२)

२५. कृष्णस्य ज्येष्ठः (४)

२६. अस्फुटितपुष्पम् (३)

२८. जालम्, क्षत्रियाणाम् यज्ञोपवीतम् (४)

३०. हस्ती (२)

३२. राज्ञः समूहः (३)

३४. वार्धक्यं यस्य नास्ति (३)

३६. कूपः (२)

३८. ज्ञानम् (तत्पर्यायवाची विसर्गरहितः) (२)

**एकाक्षरम्**

२२. पावकः, तीक्ष्णः

३९. निश्चयः, असंशयः

# पदरञ्जनी - ५ (उत्तराणि)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अ 1 | ज 2 | ग 3 | रः | | ग 4 | | प्र 5 | मा | ता 6 |
| क्ष 7 | प | णः | | या 8 | णिः | | क | | वु |
| पा 9 | ति | | ना 10 | टः | | ता 11 | र | का | रिः |
| ट | | चे 12 | लम् | | स 13 | र | णम् | | |
| कः | | टी | | म 14 | | कि | | कौ 15 | षम् |
| | द् 16 | | शि 17 | ख | रि 18 | णी | | वे | |
| शू 19 | र्प | ण | खा | | ध | | भे 20 | री | |
| क 21 | णः | | व 22 | या | मः | | लम् | | वे 23 |
| रः | | फा 24 | लः | | | फाः 25 | | पा 26 | ता |
| | म 27 | णिः | | झि 28 | ल्लिः | | | म 29 | लः |
| गो 30 | दा | | क 31 | रि | | कु 32 | क 33 | रः | |
| | ला | | | का 34 | ल 35 | कू | टः | | के 36 |
| क 37 | पी | त | नः | | व 38 | टी | | क 39 | लिः |

## नीतिद्विषष्टिका

यत्कुपिता खलभुजगाः परमर्मघ्नं क्षरन्ति वाक्यविषम्।
तच्छान्तिमयैरगदैः विषमिव सन्तः प्रशमयन्ति।।

துஷ்டர்களான பாம்புகள் பிறர் மர்மங்களைப் பிளக்கும் வாக்ய விஷத்தைக் கக்குகிறார்கள். அந்த விஷத்தை சாந்தி என்ற மருந்தால் பெரியோர்கள் போக்குகிறார்கள்.

# साहित्यचित्रम्

भैमीसमीपे स निरीक्ष्य यत्र ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
कृतप्रियादूत्यमहोपकारमरालमोहद्रढिमानमूहे ।।

नैषधीयचरितम् ६.७२

Registration with Registrar News Paper of India 30478 / 77

SAMSKRITASRI

मैत्रीं भजताऽखिलहृज्जेत्रीम्

आत्मवदेव परानपि पश्यत।

युद्धं त्यजत, स्पर्धां त्यजत

त्यजत परेष्वक्रममाक्रमणम्

जननी पृथिवी कामदुघाऽऽस्ते

जनको देवः सकलदयालुः

दाम्यत दत्त दयध्वं जनताः

श्रेयो भूयात्सकलजनानाम्।।

Printed by: Zigma Graphics, 9/1, Thirtharappan Street, Triplicane - 5
Edited and Published by Sri S. Srinivasa Sarma on behalf of the
Samskrit Education Society (Regd.)
Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600028.